# श्री सरोजिनी सौरभम्

नाम

# नव्यं नाटकम्



रचयिता

महीधर वेङ्कटरामशास्त्री

ाहित्यविद्याप्रवीणः; आयुर्वेदविशारदश्च.

राजमहेन्द्रवरम

(आन्ध्रप्रदेशः)

# श्री सरोजिनी सौरभम्

नाम

# नव्यं नाटकम्

रचयिता

महीधर वेङ्कटरामशास्त्री

वैयाकरणः; साहित्यविद्याप्रवीणः; आयुर्वेदविशारदश्च.

राजमहेन्द्रवरम्

(आन्ध्रप्रदेशः)






1960 (मूल्यं रु: 2-0-0

Postage Extra 50

2-50

# उपोद्घातः

Dr. V. RAGHAVAN, M.A.Ph D.,
Professor of Sanskrit,
University of Madras.

साहित्यविद्याप्रवीणैर्महीधरोपाह्वैर्वेङ्कटरामशास्त्रिभिर्विरचितं 'सरोजिनीसौरभम्' नामेदं नवीनं रूपकं मया समग्रं पठितम्। अभिनन्दनार्हः समुद्यमोऽयमेतेषां, विशिष्य एतादृशनूतनरूपकनिर्माणविषयकः। अत्र ये केचन शोधनार्हा अंशाः, तान् अविगणय्य, विभावयन्तु रसिका उपादेयांशान्।

रूपकमेतन्न केवलं कालतो नूतनम्, अपितु वस्तुनि, तत्तद्विषयप्रदर्शनेच नूतनं मार्गमवलम्बमानं साम्प्रतिकं संस्कृतसाहित्यं सञ्जीवयति।

नवाङ्कपरिमिते प्रकरणजातीयेऽत्र रूपके बहवोऽद्यतनसामाजिकविषयाः राष्ट्रीयाः सामूहिकाश्च - वरशुल्कप्रयुक्तः क्लेशः, जातिकलहः, ग्रामोद्धारः, जनतासमुन्नतिः इत्यादयः परामृष्टाः कामपि जीवकलां ददति।

कवेरस्य वाक्यशैली च सरला रूपकानुरूपा, तत्र तत्र सुभाषितपद्योपगुम्फिता च। प्रसन्नं मधुरं सूपममर्थवच्चेदं पद्यं पञ्चमाङ्के —

अनुक्तवाचोऽपि मुखप्रसादः
संधातुरर्थस्य मुदावहः स्यात्।
यथा प्रदोषे तमसा विमूढ -
लोकस्य कान्तिः समुदेष्यदिन्दोः॥

प्रजानेतृत्वं कृतात्मभिरेव निर्वोढुं शक्यमित्यमुमाशयं नवमेऽङ्के 'मोहे सत्यपि' इति श्लोकः सम्यक्प्रतिपादयति।

भरतवाक्येन सह वयमपि मुख्यमिममर्थं प्रार्थयामहे, यद् जनानां वा देशानां वा मिथः प्रेम विना, उपायजातमन्यन्न योगक्षेमाय भवेदिति —

सम्पत्तिदानं नहि मुख्यमस्ति
न श्रान्तिदानं नच भूमिदानम्।
हीनस्य लोकस्य सुखाप्तिहेतुः
प्रेमैकदानं नृवरेषु भूयात्॥

मद्रपुरी —
विश्वविद्यालयः
३ - ७ - १९६०

(sd) वे. राघवः
संस्कृत विभागाध्यक्षः

यच्चामुखे राघवविश्रुताख्य-
द्योभारतीमित्रकराभिमर्शात्।
उन्मीलितं, दिक्षु कथं न सर्पेत्?
सरोजिनीसौरभमेतदार्याः॥

—इति कृतज्ञः कवयिता

# ERRATUM

| Page | Line | For | Read |
|---|---|---|---|
| 5 | 3 | विद्य | विद्या |
| 6 | 1 | विध्द्न् | विद्वन् |
| 6 | 4 | गतिं न संविदनू | गतीरसंविदन् |
| 32 | 1 | समुचादारा | समुदाचारा |
| 32 | 23 | निष्क्रमन् | निष्क्रामन् |
| 33 | 9 | वारमन्ते | वारमन्ति |
| 42 | 13 | प्रणा | प्राणा |
| 58 | 8 | दूती | धात्री |
| 58 | 9 | बाहिरम् | बाह्यम् |
| 59 | 3 | प्रणा | प्राणा |
| 68 | 15 | भोरभि | भो अभि |
| 71 | 14 | निवसतीति | निवसतीति श्रुतम् |
| 78 | 3 | तार | मुख्या |
| 96 | 7 | अनुचितमस्य | अनुचितमिदमस्य |
| 97 | 19 | क्षमतागुण | क्षमागुण |
| 103 | 12 | नस्यति | नश्यति |
| 104 | 5 | धुःख | दुःख |
| 105 | 4 | तत्तदतू | तैस्तैर्क्रतू |
| 109 | 7 | मूर्चितस्य | मूर्छितस्य |

| Page | Line | For | Read |
|---|---|---|---|
| 111 | 9 | For समुचिती दण्डाधिकारे ऽ पिच<br>Read समुचिता दण्डाधिकारे क्रिया | |
| 116 | 12 | भावरूपा | भावनारूपा |
| 118 | 4 | लम्ब्री | लम्बि |
| 120 | 17 | भर्तु | भर्तृ |
| 121 | 22 | प्रेमाध्द्वैत | प्रेमाद्वैत |

— *Meanings* —

| Page | Line | |
|---|---|---|
| 36 | 20 | मधुकृतकोपनस = Very sweet pine-apples |
| 64 | 3 | यावनजपा : Rose |
| 112 | 13 | मलपूः : Scavenger |
| 114 | 7 | ह्रौडक्किकः : हुडुकः : A small hour-glass-shaped drum<br>तेन जीवति |

## —: किंचिदाशंसनम् :—

न याचेऽधिराज्यं न पीठं च पूज्यं
न भास्वत्कलत्रं न वासो विचित्रम् ।
रसास्वादतृप्तं चिराह्लादशस्तं
मदायत्तमास्तां रसज्ञस्य चित्तम् ॥

## —: सत्कविनुतिः :—

विश्वान्तरालं विविधार्थसंकुलं
तस्माच्च धेनोर्बृहदूधसो यथा ।
दुग्ध्वाऽमृतं युक्तिमवेक्ष्य सज्जनान्
यः पाययेत्तं प्रणमामि सत्कविम् ॥

## —: उद्धतनिरसनम् :—

गुणेऽप्यसद्दोषविभावनैक-
चित्ताय तस्मै नम उद्धताय ।
यः कुन्दमालावृतकण्ठदेशोऽ
प्यनुस्मरेच्चेतसि पूतिगन्धिम् ॥

## —: विद्वदनुनयनम् :—

कल्पितं चाऽपि वस्त्वत्र श्रोतॄणां मुदमावहेत् ।
अश्वारोहणवत्स्वप्ने स्वानुभूतिविशेषतः ॥

नानुभूतेः परोलोकः साऽपि कालादिभेदतः ।
भिद्यते तेन धीराणां नाग्रहः कृतिवस्तुषु ॥

कल्पितं वस्तु चात्रेति नोदास्यं बुधसत्तमाः !
गृह्णन्तु मत्कृतिमिमां यदि स्यादत्र चारुता ॥

## —: कृतज्ञतानिवेदनम् :—

अधीतपाणिनीयेन चेरुवूपाधिकेन च ।
शिवरामकृष्णशास्त्रिसुधियाऽजन्तनामनि ॥

मुद्राक्षरालये स्वीये वर्णत्रुट्यादिवर्जितम् ।
मुद्रापितमिदं काव्यं प्रमोदायास्तु धीमताम् ॥

— इति कृतिकर्ता

# इतिवृत्तसंक्षेपकथनम्



आढ्यपतिनाम्नः कस्यचन धनिकस्य पुत्रो विद्यास्नातः स्वातन्त्र्यभावतत्परः साहसिको गुणचन्द्रनामा कश्चन युवा आसीत्। सतु प्रमादवशात्करिकलभेन पीडितां सरोजिनीं नाम काञ्चन तरुणीमरक्षत्। तयोःपरस्परस्योपरि प्रेमातिशयः सञ्जातः। तेन कारणेन गुणचन्द्रः प्रभूतवरशुल्कमभिलष्य पित्रा स्नुषात्वेन निश्चितामपि कन्यकां नाङ्गीचकार। कुपितः पिता दूरीचकार गुणचन्द्रम्। गुणचन्द्रो विनीतोऽपि विवाहविषये स्वाभिमता कन्यका श्रेयस्करीति निश्चिन्वन् प्रभूतमपि पित्र्यं धनं परित्यज्य मातुर्वचनानुरोधात्सुजनपुरनाम्नि ग्रामे कृषिकर्म कर्तुमारेभे। सरोजिन्यपि सर्वस्वदानेन आत्मानं वोढुमभिलषन्तं श्रीधरं नाम कञ्चन भूस्वामिनं निराचकार। सरोजिनीगुणचन्द्रयोर्विवाहः समजनि। श्रीधरस्तु तौ दम्पती बहुधा पीडयामास।

तथा श्रीधरेण पीडितापि सा सरोजिनी सौशील्यमात्मनः परिपालयन्ती भारतनारीललामभूता ह्यासीत्। गुणचन्द्रोपि स्वशक्तिमवलम्ब्य क्रमेण दण्डाध्यक्षः सर्वाध्यक्षश्चासीत्। संघटनाविशेषास्तु नाटके तत्तदुचितस्थलेषु विज्ञेया इति सविनयं सहृदयानभ्यर्थये ॥

इति



— विनीतो रचयिता

## —: नाटकेऽस्मिन् प्रधानपात्राणि :—

### —: पुरुषाः :—

१. गुणचन्द्र :— कथानायकः।
२. आढ्यपति :— गुणचन्द्रस्य पिता।
३. सुधापूर्ण :— गुणचन्द्रस्य मित्रम्।
४. देवव्रत :— आढ्यपतेः कुलगुरुः
५. मणिदासः — सरोजिन्याः पोषकपिता
६. श्रीधरः — कश्चन भूस्वामी
७. दुर्दान्तः — रक्षाध्यक्षः (राजस्यालः)
८. बुधचन्द्रः — सर्वाध्यक्षः (स्वर्णप्रस्थनगरस्य राजा)

### — स्त्रियः -

१. सरोजिनी — कथानायिका
२. सुव्रता — मणिदासस्य जाया
३. भ्रमरिका — सरोजिन्याः प्रियसखी
४. एलावती — श्रीधरस्य दूती

कलहंसिकाद्या अन्याश्चाप्रधानभूताः स्त्रियः पञ्चषाः सन्ति।

श्रीरस्तु

# श्री सरोजिनी सौरभम्

## नाम नव्यं नाटकम्

## प्रथमोऽङ्कः

(अथ नान्दी)

या वैक्लव्यमपास्य रक्षति जनं काले शुचा संकुले
या दुष्प्रापमपि क्रमेण पदमारोढुं च निश्श्रेणिका ।
यां विस्मृत्य पुमान् जघन्यमपि संश्रित्यात्मघाती भवेत्
तां गुप्ताकृतिमात्मशक्तिमखिलैराराधनीयां स्तुमः ॥

अपिच

जैवी शक्तिर्मधुरमधुरा भौतिकी चातिकट्वी
तत्संयोगाद्भवति हृदयं प्राणिषु द्वैतरूपम् ।
तत्कालुष्यं शरदिव विभज्याम्भसः प्रीयते या
तां कल्याणीं निजहृदि भजे संस्कृतिं भारतीयाम् ॥

नान्द्यन्ते सूत्रधारः

सूत्र :— (नेपथ्याभिमुखमवलोक्य) प्रेयसि! वक्तव्यविशेषोऽस्ति, इतस्तावदागम्यताम् ।



नटी :— (प्रविश्य) भाव! किंवा नियोक्तुकामो भवान् ?

सूत्र :— सुन्दरि! केनचन वैदेशिकेन विपश्चिता समावेदितोऽस्मि स्वर्वाणीविलसितं नव्यं नाटकमस्मिन्वलन्तोत्सवेऽभिनी रसानन्दोऽनुभावनीय इति। किन्तु सा वाणी सर्वेषां पारि षदानामभिमता वा न वेति संशेते मे मनः।

नटी :— भाव! वैदेशिकानामेव सहृदयानां सा समादरणीयेति कथं देश्यानां न तादृशी भवेत्? पश्य—

या पीयूषनिभं रसं रुचिवशादापाय्य तृप्तिं व्यधात्
दत्वा पाण्यवलम्बमग्रपदसञ्चारं समाबोधयत्।
भावान्भव्यगुणान् हितानचकथद्गीर्वाणवाणीमिमां
स्वां धात्रीमिव भक्तियुक्तिकलितो विस्मर्तुमीहेत कः? ॥

सूत्र :— तर्हि (पारिषदान् पृथक्पृथक् निर्दिशन्)

नानाशास्त्ररहस्यवेदिन इमे सङ्गीतसाहित्ययोः
सारस्यं सरलेन मानसपुटेनापीय तृप्ता इमे।
एते नीतिपथेन लोकमखिलं नेतुं पुरः पेशला
स्तानेतान्नवनाटकेन वद मे केनाद्य सेवामहे ॥

नटी :— किमतः परमस्ति? यदन्ध्रदेशीयेन महीधरोपाह्वयेन वेङ्कट रामशास्त्रिणा ग्रथितलङ्कस्तुरमणीयं सरोजिनीसौरभं नाम नव्यं नाटकमभिनीय पारिषदानानन्दयाम इति।

सूत्र :— सुष्ठु वर्तते। नाटकमेतदचिराभ्यस्तमेव खलु युष्माभिः तद्यथा वाचिकाभिनयादिषु परिहासो नस्यात्तथा प्रयति- तव्यम्।

नटी :— आर्य! सर्वमपि भवतः प्रयत्नविशेषात्सुष्ठु वर्तते।

किंच सदस्यानां सहृदयतागुणविशेषात्सुष्ठुतरं सम्पत्स्यते तथाहि —

सहृदयहृदये निहितं
निर्गुणमपि गुण्यमेव कविवचनम्।
विरसमपि मधुनि भावित
मामलकं हृद्यमेव भवति फलम्॥

उपमा

सूत्र :— तर्हि सदस्यानां मनःप्रसादनायानतिचिरकृतावतारमिमं वसन्तमृतुमधिकृत्य गीयतां मृदुपदसरणिः। अयमद्य—

चक्षुः प्रीणयति प्रफुल्लकुसुमैर्घ्राणं च गन्धोत्किरैः।
श्रोत्रं रञ्जयति प्रबोधविशदैर्माद्यत्पिकानां रुतैः।
जिह्वां तर्पयति प्रकामसधुरैश्चूतादिभिः सत्फलैः
सर्वस्याऽपि जनस्य साम्यकलया सम्राडृतूनामयम्॥

नटी :— पश्यतु प्रेयान्।

नटद्विहङ्गस्तटिनीतरङ्गः
प्रमत्तभृङ्गः सुमजालसङ्गः।
स्त्रीणामपाङ्गोऽयमनङ्गरङ्गः
फुल्लान्तरङ्गः सुरभिप्रसङ्गः॥

अपिच

नीहारबन्धप्रविमुक्तरूपौ
मिलत्सपूर्णद्युतिराजमानौ।
सेवां विधत्तो मुदमादधानौ
सरोजिनीचन्द्रमसौ प्रजानाम्॥

सूत्र :— सुन्दरि! केनचन वैदेशिकेन विपश्चिता समावेदितोऽस्मि स्वर्वाणीविलसितं नव्यं नाटकमस्मिन्वलन्तोत्सवेऽभिनी रसानन्दोऽनुभावनीय इति। किन्तु सा वाणी सर्वेषां पारि षदानामभिमता वा न वेति संशेते मे मनः।

नटी :— भाव! वैदेशिकानामेव सहृदयानां सा समादरणीयेत् कथं देश्यानां न तादृशी भवेत्? पश्य—

या पीयूषनिभं रसं रुचिवशादापाय्य तृप्तिं व्यधात्
दत्त्वा पाण्यवलम्बमग्रपदसञ्चारं स्वमाबोधयत्।
भावान्भव्यगुणान् हितानचकथद्गीर्वाणवाणीमिमां
स्वां धात्रीमिव भक्तियुक्तिकलितो विस्मर्तुमीहेत कः?॥

सूत्र :— तर्हि (पारिषदान् पृथक्पृथक् निर्दिशन्)

नानाशास्त्ररहस्यवेदिन इमे सङ्गीतसाहित्ययोः
सारस्यं सरलेन मानसपुटेनापीय तृप्ता इमे।
एते नीतिपथेन लोकमखिलं नेतुं पुरः पेशला
स्तानेतान्नवनाटकेन वद मे केनाद्य सेवामहे॥

नटी :— किमतः परमस्ति? यदन्ध्रदेशीयेन महीधरोपाह्वयेन वेङ्कट रामशास्त्रिणा ग्रथितसद्वस्तुरमणीयं सरोजिनीसौरभं नाम नव्यं नाटकमभिनीय पारिषदानानन्दयाम इति।

सूत्र :— सुष्ठु वर्तते। नाटकमेतदचिराभ्यस्तमेव खलु युष्माभिः तद्यथा वाचिकाभिनयादिषु परिहासो नस्यात्तथा प्रयति तव्यम्।

नटी :— आर्य! सर्वमपि भवतः प्रयत्नविशेषात्सुष्ठु वर्तते।

किंच सदस्यानां सहृदयतागुणविशेषात्सुष्ठुतरं सम्पत्स्यते तथाहि —

सहृदयहृदये निहितं
निर्गुणमपि गुण्यमेव कविवचनम्।
विरसमपि मधुनि भावित
मामलकं हृद्यमेव भवति फलम् ॥

उपमा

सूत्र :— तर्हि सदस्यानां मनःप्रसादनायानतिचिरकृतावतारमिमं वसन्तमृतुमधिकृत्य गीयतां मृदुपदसरणिः। अयमद्य—

चक्षुः प्रीणयति प्रफुल्लकुसुमैर्घ्राणं च गन्धोत्किरैः।
श्रोत्रं रञ्जयति प्रबोधविशदैर्माद्यत्पिकानां रुतैः।
जिह्वां तर्पयति प्रकाममधुरैश्चूतादिभिः सत्फलैः
सर्वस्याऽपि जनस्य साम्यकलया सम्राड्ऋतूनामयम् ॥

नटी :— पश्यतु प्रेयान् ।

नटद्विहङ्गस्तटिनीतरङ्गः
प्रमत्तभृङ्गः सुमजालसङ्गः।
स्त्रीणामपाङ्गोऽयमनङ्गरङ्गः
फुल्लान्तरङ्गः सुरभिप्रसङ्गः॥

अपिच

नीहारबन्धप्रविमुक्तरूपौ
मिलत्प्रपूर्णद्युतिराजमानौ।
सेवां विधत्तो मुदमादधानौ
सरोजिनीचन्द्रमसौ प्रजानाम् ॥

सूत्र : — अहो ! स्त्रीणां चित्तवृत्तिः सर्वत्र निशिता पेशला वर्तते । यतो हि श्रुत्वेदं पद्यं सर्वाऽपि परिषद्द्रागनपा वाहिणी दृश्यते ।

नटी :— आत्मशक्तिमतां भवतां प्रसादादेव सर्वमेतत्सिद्ध्यति पश्यत्वार्यः —

प्रचलति हृदि यस्य चात्मशक्तिः
स निखिलकर्मसु नित्यसिद्धिमेति ।
न विपदि लभते हि वैमनस्यं
जगति यथा गुणचन्द्र एष धीरः ॥

(इति निष्क्रान्तौ । ) (प्रस्तावना)

———0———

( ततः प्रविशति गुणचन्द्रः )

गुण :— ( आत्मगतम् )

यः शैशवेऽभ्यस्तमनोज्ञविद्य
स्तारुण्यभावेऽभिमतद्वितीयः ।
स्वशक्तिसम्पादितजीविकाङ्गैः
पुमर्थसेवी स पुमान् सुखायुः ॥

परिचारकः — ( आगत्य ) स्वामिन् ! कुलगुरुर्देवव्रत आगच्छति ।

गुण :— पूजार्हा गुरवः । प्रतिपत्त्या प्रवेशय ।

( परिचारको निष्क्रान्तः, देवव्रतः प्रविशति )

गुण :— विद्वन्! नमस्ते। आसनमलङ्क्रियताम्।

( उभावुपविशतः )

देव :— आयुष्मन्! चिरं वर्धस्व। त्वम् विद्यास्नातकोऽसीति द्रष्टु मागतोऽस्मि।

गुण :— सर्वथा शिष्याणामभ्युदयकांक्षिणो हि गुरवः।

देव :— कुमार! इतः परं यथाभिलषितमनुभूयतां पित्र्यमर्थजातम्।

गुण :— विद्वन्! यत्किञ्चिदस्ति वक्तव्यमत्र।

देव :— किं तदायुष्मन्?

गुण :— विद्वन्! बाल्यात्प्रभृत्यनुभूतभोगभाग्यस्य पितृसंपादितनिस्तुलधनराशेराधिपत्ये वर्तमानस्यापि लोकमिमं प्रविविक्षोर्मम न मनसो निर्वृतिलेशः संभवति।

देव :— कुमार! नह्यत्र किमपि कारणं पश्यामि।

गुण :— गुरो! विषमेयं लोकव्यवहारसरणिः यथा—

एकः क्षुधातिकृशतां गतमात्मकुक्षिं
संदर्श्य दीनमनसा वृणुते हि पिण्डम्।
सोद्गारधारमुपभुज्य रसोत्तमान्न
मेकस्तु हृष्टमनसा तमपाकरोति॥

देव :— सर्वस्याप्यस्योच्चावचभावस्य प्राग्भवीयं कर्म कारण मामनन्ति वृद्धाः।

गुण :—विद्वन् ! भवतु नाम तद्विप्रकृष्टं कारणं सन्निकृष्टन्तु प्रजानां तदधिनेतुश्च प्रयत्नलोप एवेति निश्चेतुं शक्यते। नोचेत्तथा—

गाढं क्षुधार्तोऽन्यगतिं न संविदन्
श्रीरामरामेति हि रौति संततम्।
भोगैकदक्षु श्रीमदपक्ष्मपीवरो
दैवं न जानाति सुवर्णलञ्चयी॥

एवं सन्निकृष्टं दैवभक्तिरूपं सत्कर्म दीनजनं न रक्षति तस्मादवश्यं प्रजापालकेनार्तिहरेण भवितव्यम् तद्यथा —

क्वचिदुपचितमर्थं भोगशून्यं नरेशो
जलधिजलमिवार्कः सम्यगाचूष्य युक्त्या।
सरित इव सुदीर्घाः कल्पयेद्व्ययवृत्तीः
कृतमतिरनुजीवेत्ताः समाश्रित्य लोकः॥

देव :— आयुष्मन् ! त्वन्मतिः कल्याणकरी सर्वत्र।

सेवकः — (आगत्य) स्वामिन् ! भवतो मित्र सुधापूर्णो द्वारि तिष्ठति। नियोगमनुतिष्ठामि।

गुण :— मित्रस्य कोवाऽवरोधः? अवश्यं प्रवेशय।

सेव :— तथेति निष्क्रान्तः।

देव :— आयुष्मन् ! तव शुभमतिमवगम्य सन्तुष्टोऽस्मि। गन्तुमनुजानीहि। (उत्थितं देवव्रतं गुणचन्द्रोऽप्युत्थाय प्रणमति। देवव्रतो निष्क्रान्तः)

गुणः— (आत्मगतम्) हृदयनिर्विशेषं मित्रं सुधापूर्ण आयाति। मित्रं नाम संसारेऽस्मिन्विधिना सृष्टमपूर्वं वस्तु। तथाहि

अन्तर्विधत्ते मधुरं च भावं
पुरोऽपि पश्चादपि तुल्यरागम्।
स्निह्यत्यहो ! दूरमपाकृतं वा
मित्रं हि लोकेऽत्र सजीवरत्नम्॥

(ततः प्रविशति सुधापूर्णः समबुद्धिश्च। गुणचन्द्रः सुधापूर्णमालिङ्ग्यासन उपवेश्यान्यमुपवेशयति। स्वयं चोपविशति) (सुधापूर्णं दृष्ट्वा) अये ! सुधापूर्ण ! चिरादागतोऽसि। अपि कुशलिनस्ते तातपादा अन्ये बान्धवाश्च?

सुधा :— मित्र ! भगवतः कटाक्षात्सर्वे कुशलिनः।

गुण :— ( अन्यं दृष्ट्वा ) सुधापूर्ण ! कोऽयं महाभागः ?

सुधा :— मम पैतृष्वसेयः समबुद्धिर्नाम।

गुण :— वन्दे महाभाग ! ( इति समबुद्धिं वन्दते। सुधापूर्णं दृष्ट्वा ) समाप्तविद्यः किमुद्यमोऽद्य भवान् ?

सुधा :— राजसेवामन्तरा नान्यः कश्चन जीवनोपायो दृश्यते। साऽपि मादृशस्य दुर्लभा भवति। स्वयंकृषे रज्जुपयुक्ता चेयं विद्या।

गुण :— हन्त ! विज्ञानपरीक्षासु प्रथमकक्ष्यामारूढस्याऽपि भवत इयमवस्था घटते !



सम :— सखे गुणचन्द्र ! पश्याऽत्र सत्यम् !

प्रयोगवैशिष्ट्यमविन्दती सा
विद्या वृथा स्याच्चिरसेविताऽपि।
लब्ध्वाऽपि लोके परिणाहि रूपं
शस्त्री वृथा स्याज्जनुषान्धहस्ते ॥

किञ्च राज्ञाऽपि बुद्धिमतां समादरः कर्तव्यः। तथाहि—

बुद्धिशक्तिर्वर्धनीया राष्ट्रे सर्वत्र पालकैः।
तस्या ह्रासे तमोराज्यं प्रसज्येत समन्ततः ॥

गुण :— सखे समबुद्धे ! शृणु माम्।

वित्तं नीतिं निग्रहं च नैपुणीं सर्वकर्मसु।
आत्मानात्मविवेकं या दत्ते विद्येति सोच्यते ॥

किञ्च प्रगुणानां सद्यो वा कालान्तरे वा सामर्थ्यमनु सभाजनं संभवत्येव।

सुधा :—मित्र ! तिष्ठतु तत्तथा। किमुद्योगो भवान् ?

गुण :— किमपि नावगच्छामि।

सुधा :— पितृपैतामहस्य वित्तराशेरुपभोगमन्तरा किमन्यदपेक्ष्यमस्ति भवतः। आढ्यपुत्रः खलु भवान्!

गुण :— सत्यमुक्तं भवता। तथाप्यात्मवृत्तिः सर्वैरात्मशक्त्यैव निर्वर्तनीयेति तदन्यत्सर्वं चौर्यमेव भवेदिति च मे मतिः। पश्य—

अर्थेषु युक्तेष्वनियुज्य यो वै
बुद्धेस्तथा कर्मण इन्द्रियाणि।

परस्य पिण्डेन सुखं बुभुक्षुः
सोऽन्धः स पङ्गुर्भवतीह नान्यः ॥
(नेपथ्ये कलकलः)

गुण :— (कर्णं दत्त्वा) अये ! किमेतत् (पुनर्नेपथ्ये) हन्त! हन्त! प्रमादवशान्नगरं प्रविष्टेन वनगजेनैकेन समारूढयौवना काचन सुन्दरी शुण्डादण्डेन दृढं गृहीता। तं दृष्ट्वा सर्वोऽपि नगरजनः पलायते। न कोऽपि तां रक्षितुं शक्नोति।

नवपल्लवसुमरुचिरां
वल्लीमिव लघुतरेण हस्तेन।
वन्योऽयं करिकलभो
रमणीमादाय याति रभसेन॥

रक्ष्यतामियं महाभागाः !

गुण :— (सरभसमुत्थायायुधपाणिः) अये! न भेतव्यं न भेतव्यम् अयमहमागच्छामि। (उच्चैः)

धैर्यमेव कुसुमस्य वृन्तव
द्बन्धनं हि हृदयस्य सङ्कटे।
विश्लथं भवति यस्य स स्वक
च्छाययाऽपि मरुतेव पात्यते॥

(इति पठन्निष्क्रान्तः) (तमनुसृत्य तावपि गतौ। यवनिका पतति) नेपथ्ये करिचीत्कारध्वनिः करतालध्वनिश्च) (पुनर्नेपथ्ये) आश्चर्यमाश्चर्यम् ! एष महात्माऽचिरारूढयौवनोऽस्मा स्याढ्यपुत्रो गुणचन्द्रः साहसिक्या वृत्त्याऽऽयुधेन वन गजस्य शुण्डादण्डमाहत्य मूर्च्छितामबलां रक्षितवान्

तथाहि—

विनद्यातिधीरं न्विवल्यातिहेलं
प्रणुद्योच्चकुम्भं शिताग्रेण शङ्कोः।
किशोरेण तुल्यं विशालाननस्य
प्रभज्येभमेनामवत्येष कान्ताम् ॥

(ततः पर्यङ्केन मूर्च्छितामबलां धारयन् गुणचन्द्रः सखायौ तस्या धात्री च प्रविशन्ति)

गुण :— (अबलां सकरुणं साश्चर्यं च दृष्ट्वा) सखे !सुधापूर्ण! पश्यैतामबलाम् —

कठोरशुण्डातलघट्टनेन
म्लानां हि मृद्वीं तनुयष्टिमस्याः।
मुखं च दृष्ट्वा रुचिरं स्मरामि
सद्योद्विपोत्खातसरोजिनीं ताम् ॥

(सम्यक्परिशील्य) सचेतनामेवैनां मन्ये। यतो हि —

नाङ्गानां चलनं न पक्ष्मदलनं न श्वाससवायूद्गमो
नोत्कम्पो भुवि नान्तरक्षिवलनं नाप्योष्ठविश्लेषणम्।
जीवत्येव तथापि सेयमिति मे चित्त मुहुश्शङ्कते
यल्लावण्यरुचिं न मुञ्चति यथा ग्रीष्माभिविद्धा लता ॥

(पटान्तेन वीजयन्नात्मगतम्) अहो! सौन्दर्यं त्वेतादृश्य स्तरुण्यो जगत्यामङ्गुलीष्वेव गणनीया दृश्यन्ते।

तरुणी :— (उत्कम्प्य) अहो! गजो गजः (इति प्रलपति)

सुधा :— सखे गुणचन्द्र! जीवतीयमसंशयम्।

High character of गुणचन्द्र

गुण :— कृतार्था वयं यत इयं प्राणान्वहति। इतः परं नार्हामि परवतीमेनां स्प्रष्टुम्। पश्य—

विपत्तिकालं परिहाय नान्यां
स्त्रियं स्पृशेदेष महान्हि दोषः।
नृपोऽपि वैद्य सहते स्पृशन्तं
रुग्णां स्वकीयां न ततः कदाचित्॥

( इति तस्याः शिरः सास्तरणायां भूमौ निधाय पुन र्वीजयति )

तरुणी :— अहो! म्रिये पालयत मां पालयत मां ( इति वदन्ती पाणी इतस्ततश्चालयन्ती स्पृष्टं गुणचन्द्रस्य हस्तं दृढं गृह्णाति )

सुधा :— सखे गुणचन्द्र! मोहेन किंचित्किंचिद्विमुच्यमानेयं भीत्या समाक्रान्तमनस्कतया तव हस्तस्पर्शं स्वरक्षणाव-लम्बमिव यथार्थं मन्यमाना तवकरममुं दृढं गृह्णाति। भयाविष्टस्य स्वप्नगतस्य मोहेन विमुच्यमानस्य च जन्तोरीदृश्यवस्था स्वाभाविकी खलु तद्यथा—

स्वप्ने भीत्युदिते च गाढविलये मोहे समुद्यत्स्मृतिं
स्तोकां प्राप्य यथान्धकारपटले खद्योतदीप्तिं जनः।
सत्यार्थं न विदन् स्वरक्षकतया व्योमापि चालम्बते
किंवा वक्तुमिहास्ति सन्निधिगते मूर्ते तु सद्वस्तुनि॥

तरुणी :— हा प्रत्युज्जीवामि प्रत्युज्जीवामि। यतोऽयं कश्चन महात्मा करावलम्बं दत्वा गजस्य शुण्डादण्डान्मामभि-

रक्षति । (इत्युत्स्वपन्त्यक्षिणी उन्मील्य गुणचन्द्रं दृष्ट्वा मम जीवितं तवैवेति भावं प्रकटयन्ती तस्य करं स्व-कराभ्यां दृढं गृहीत्वा पुनर्मोहेन समाक्रान्ता । )

गुण :—( आत्मगतम् ) अहो ! किमेतत् ? अस्या मृदुलतरकर-स्पर्शात्काचिदपरा शक्तिर्ममान्तः प्रविश्य किमपि बोध-यन्तीवास्ते । तथाहि —

आराल्लोकविदां कृपारसधुनीभाजां गुरूणां चिरं
सेवालब्धसमग्रबोधवशतः प्राप्याऽपि चोच्चैः स्थितिम् ।
मच्चित्त कुमुदं विधोरिव करस्पर्शादिदंपूर्वका
देतस्याः परिपूर्णरूपमयते भावस्त्वपूर्वोह्ययम् ॥

( नेपथ्ये ) अयि भोः ! वन्यकरिग्रहणेन विपन्ना मम दुहिता येन महात्मना रक्षिता तमापन्नबन्धुं कुमारं मत्सुतां सरो-जिनीं च द्रष्टुमुत्सहते मे मनः । कुत्रास्ते स धीरः ?

गुण :—( श्रुत्वा ) किमस्या नाम सरोजिनी ! नामाक्षराणि शोभन्ते । ( नेपथ्ये ) भो महाभाग ! मोहेन परिदूयमानां तरुणीं परिचरन् समित्रपरिजनो गुणचन्द्रः पुरश्शालायां वर्तते । प्रविशतु भवान् ।

धात्री :— कुमार ! अस्याः पिता मणिदासः श्रुत्वा वृत्तान्त मिम मायातीवास्ते । ( नेपथ्ये )

अनभिलषितदम्भोऽन्यस्य हेतोर्नितान्तं
मधुरजलमिवाद्रियः कृपापूरमारात् ।

निरधिकरयमुचक्ष्वाख्याभितप्तं जनं द्रा
गवति स करुणायाः सिन्धुरापत्सु बन्धुः ॥
( इति पठन् मणिदासः प्रविशति )

गुण :—( उत्थाय ) महाभाग ! गुणचन्द्रो वन्दते ।

मणि :— आयुष्मन् ! श्रुतं मया परोपकारपरायणत्वं साहसिकत्वञ्च भवतः ।

गुण :— भवतामाशीःप्रभावः खल्वेषः ।

मणि :— जीवति वा मम सुता ?

धात्री :— महाभाग ! आयुष्मतः प्रभावेन कुमारी जीवति वयं च सजीवा भवामः ।

मणि :— पुत्रि ! ( इति दुहितरं हस्तेन संस्पृशन्नुद्बोधयति )

सरो :—( चक्षुषी उन्मील्य पितरं दृष्ट्वोत्थिता )

मणि : —( सुतामालिङ्ग्य ) पुत्रि !

दुर्विनीतसमाक्रान्ता भाग्यरेखाभिभूषिता ।
विनीतेनैव राज्यश्रीस्त्वमेतेन विमोचिता ॥

सरोजिनी :—( गुणचन्द्रं सप्रेम सभक्तिकं च पश्यति । )

गुण :— महाभाग ! आसनमलङ्करोतु भवान् ( धात्रीं दृष्ट्वा ) अयि ! इमामप्यासन उपवेशय । ( सर्वे समुपविशन्ति )

गुण :— महाभाग ! इमां भवतो दुहितरं मन्ये ।

मणि :— मामस्या वराक्याः पोषकं पितरमवेहि ।

गुण :— वराकीति पदं श्रोतव्यविशेषं सूचयति । को नु खल्वेष विशेषः स्यात् ?

मणि :— अस्त्यत्र विशेषः । शृणोतु कुमारः । तीर्थयात्राप्रसङ्गेन देशाटनं कुर्वता मयाऽमुष्या धात्र्याः सकाशादेकहायनी सेयमुपलब्धा । अनन्तरकथनीयं तावदेषा कथयिष्यति ।

धात्री :— आयुष्मन् ! अस्याः पितरावभिजातौ ।

गुण :— ( सरोजिनीमपाङ्गेन पश्यन् ) अस्या रूपमेव कथयति पित्रोराभिजात्यम् ।

सरो :— ( शिरो नमयित्वा स्मितं करोति )

धात्री :— कुमार ! तौ जातिकलहे क्रूरै मारितौ।

सरो :— ( अश्रूणि पटान्तेन मार्जयति )

धात्री :— ( दुःखमभिनयन्ती ) किं वच्मि महाभाग ! तदा शताधिकाः साध्व्योऽपि क्रूरैरपहृताः ।

सुधा :— ननु किमबलानामवध्योक्तिरपि न तानार्द्रीकरोति स्म ?

सम :— कथमेतत्सम्भवति कठोरचित्ते ! तथाहि —

क्रूरस्य न स्यादबलाजिहीर्षोः
कृपारसस्तत्परिदेवितेन ।
किं द्रावयेत्कीरवधूविलाप-
श्चित्तं बिडालस्य बलाज्जिघांसोः ॥

किञ्च

स्त्रीषु दर्शयति शौर्यमात्मन
स्ता अपाहरति कोपविक्लबः ।
दुर्वचस्तु समुदाहरत्यमू
ज्ञानदूरधिषणो हि दुर्जनः ॥

गुण :— अहो ! जातिविद्वेषो जगति स्वार्थतत्परैरेव कल्प्यते तथाहि —

प्रकल्प्य जात्यादिविभेदमन्तरा
प्रकोप्य विद्वेषममायिनां हृदि ।
सुखेन नेतृत्व मवाप्य दुर्जना
द्विषन्ति साधूनपराधमन्तरा ॥

सरो :— ( आत्मगतम् ) अहो ! साधुभावोऽस्य महात्मनः प्रशंसनीयः ।

धात्री :— पितृहननानन्तरं हन्तुमुद्यतं कञ्चन नृशंसं निवार्य तद्गणाधिनेता रक्षितवानिमाम् ।

गुण :— हन्त ! प्रकृतिः कारुण्यं विकृतिस्तु क्रौर्यभावो हि जन्तोः पश्यन्तु भवन्तः —

परेण प्रेरितो जन्तुः क्रूरे कर्मणि वर्तते ।
स्वभावे स्थापितो मूर्द्धा करुणां प्रतिपद्यते ॥

सरो :— (आत्मगतम्) अहो! मनस्तत्त्ववेदिताऽस्य सहृदयस्य ।

मणि :— आयुष्मन् ! अत एव लोककल्याणमिच्छता पुरुषेण नृनायकेन भाव्यम् ।

सम :— (मणिदासमुद्दिश्य) अयि महाभाग! सर्वस्मिन्नपि चेतनाचेतनपदार्थजाते ह्याधिकारिकपुरुषस्य स्वाभाव्य मनुसृत्य गुणदोषौ प्रकटीभवतः—

शस्त्रीभावमुपेत्य लोहशकलः क्रूरस्य हस्ते वसन्
ग्रीवाकृन्तनकर्मणा विकलयेल्लोकं प्रशान्तात्मकम्।
तन्त्रीरूपमवाप्य वैणिककरे ग्रावाणमप्यञ्जसा
विद्राव्य श्रुतिमोहनं ननु कलं नादं प्रसूतेतराम्॥

सुधा :— यत्र देशेऽनक्षरास्याः प्रजास्तत्र नृनायकेन नितरां जागरूकेण भाव्यम्।

मणि :— आयुष्मन्! गच्छामो वयम्। ऋणवानहं विशेषतश्च मम दुहिता तव कारुण्यस्य।

गुण :— चरितार्थोऽयं जनो यस्मिन् भवन्त एवं परितुष्यन्ति।

सरो :— (जनान्तिकम्) धात्रि!

रूपे गम्भीरत्वं
नादे धीरत्वमात्मगुणवत्त्वम्।
मनसि च दयार्द्रता, का
तरुणी प्राणेशमेनमुपयाति॥



सरो :— महाभाग! नमस्ते (इति गुणचन्द्रं नमस्कृत्यापाङ्गेन पश्यन्ती पित्रा धात्र्या च सह निष्क्रान्ता)

सेवकः — (आगत्य) स्वामिन्! पितृपादाः सुधापूर्णमाह्वयन्ति।

गुण :— मित्र ! तातपादा आह्वयन्ति । गच्छतु भवान् ।

सुधा :— बाढम् ( इति समनुज्ञिना सेवकेन च सह गतः । )

गुण :— अहो ! अनेन बहुलार्थव्यतिकरेण मम हृदयं संकुल वृत्त्याऽस्ति । तथाहि —

स्वातन्त्र्यभावेन विहारशीला
निर्ज्ञातबन्धा मम चित्तवृत्तिः ।
भावैरपूर्वैर्विकलाऽद्य जाता
तत्कालबद्धेव कपोतबाला ॥

(इति निष्क्रान्तः)

इति महीधरोपाह्वयेन वेङ्कटरामशास्त्रिणा
विरचिते सरोजिनीसौरभे नाटके

प्रथमोऽङ्कः ।

# श्रीसरोजिनीसौरभे

## द्वितीयोऽङ्कः

—□—

( आढ्यपतेर्गृहप्राङ्गणदेशः )

अधमर्णः — ( प्रविश्य )

कुर्वन् महान्ति पापानि जनो जिह्रेतु लोकतः।
अधमर्णत्वनिर्विण्णो ह्रियमेति स्वतोऽपि च ॥

द्वितीयः — ( प्रविश्य ) भाव ! किमिदं निर्विण्ण इव दृश्यसे ?

प्रथमः — किं करोमि ? बह्वपत्यतादोषेण दुर्गतोऽस्मि संवृत्तः। अर्थोपार्जनोपायबहुले देशे बह्वपत्यता गुणायैव भवतु। तदभाववति तु दोषाय केवलम्।

द्वितीयः — मित्र ! निर्धनानामेवास्मद्विधानां तत्तथा भवति। धनवतां तु विनोदमावहति।

प्रथमः — अयि भोः ! किं वच्मि ? भोक्तृजनबाहुल्ये दध्नः पिच्छिलत्वाभाव इति हि लोकवादः। आहारस्यालमप्रतयाऽस्थिमात्रावशेषा मे पुत्रकाः। शेषभूतेऽस्मिन्वयसि किमपि चौद्धं शारीरं वा कर्म कर्तुं नालम्। जीर्णालयोऽपि वृद्धिपणतयाऽस्याढ्यपतेः करे नियन्त्रितो वर्तते । येनाद्याह

मनिकेतनोऽस्मि भविता। एतादृशी दुर्भगावस्था शत्रो रपि नापेक्ष्यते।

द्वितीयः — भाव! तमाढ्यपतिं शरणं गच्छ यतोऽयं भवादृशामेव वृद्ध्या परिवर्धितविभवः। अतस्तव दुर्गतिं ज्ञास्यति।

प्रथमः — मित्र! श्रूयतां सर्वं। निकेतनमात्रविसर्जनाय प्रार्थितोऽप्ययं दयां न करोति। कथमेतादृशः परस्य दुर्गतिं जानाति?

> न जानाति नूनं शुचं दुर्गतस्य
> प्रभूतार्थपूर्णः पुमान् भोगतृप्तः।
> कृतप्रातराशा सतीवाऽपि योषा
> कथं वेत्ति पत्युः क्षुधं वह्निकल्पाम्॥

द्वितीयः — भाव! सत्येयं त्वदुक्तिः।

प्रथमः — श्रूयतामवशिष्टम्। पुत्रस्य परिणयमिषेण ऋणशेषस्याप्यपनयनाय निर्बध्नाति माम्। अन्यथा राजमन्दिरे व्यवहारो दुर्निवार इत्यपि च विशेषतस्तर्जयति माम्। धूर्तोऽयं कथितं सर्वं व्यवहरिष्यति। किं करोमि? का वा गतिः?

द्वितीयः — तस्य पुत्रः सौशील्यवानिति श्रूयते!

प्रथमः — (स्मृतिमभिनीय) आं ज्ञातम्! तत्पुत्रो गुणचन्द्रो गुणसौम्य इति प्रचारबहुलोऽयं विषयः। गत्वा तमेव गुष्मन्तमनृणीकरणायाभ्यर्थये। स हि नूनं मयि दयां कुर्यात्। किमेतेनाढ्यपतिना? अयन्तु नितरां प्रलोभमूढः न किञ्चिदप्युपकुर्यात्। अहो! लोभस्य नित्योन्मेषशालित्वम्

कामादयः पञ्चभावा वार्धक्यं यान्ति कालतः ।
अन्तकालेऽपि लोभस्तु तारुण्यं प्रतिपद्यते ॥

( पुरोऽवलोक्य ) इत एवागच्छति सोऽयमाढ्यपतिः अन्यत्रापसरास्यैतस्य दृष्टिपातात् । अन्यथाद्यैव मां निर्भीयात् । ( इति निष्क्रान्तौ ) ( इति विष्कम्भः )

( ततः प्रविशत्याढ्यपतिस्तेन सह गणकश्च )

आढ्यपतिः — ( उच्चैर्विहस्य )

सन्त्येव लोके बहुवृत्तयस्ता
बह्वल्पभावेन भजन्ति दोषम् ।
उच्येत चेत्सत्यवचः प्रकामं
वार्धुष्यमेकं व्रतजीवनं हि ॥

गणकसिंह! अयमेव मम निर्वृतिहेतुः यन्मया पितृपैतामह-मर्थजातं द्विगुणं त्रिगुणं वा वर्धितम् । एताह्यष्टावायस-पेटिकाः सौवर्णशकलैस्सम्पूरिताः । इयन्तु नवमी पेटिका तादृशप्रायैव । पश्य ! द्रव्यार्जनमेव पुरुषस्य प्रधानं लक्षणं जीवितप्रयोजनञ्च भवति ।

गणकसिंहः — स्वामिन् ! सत्यमेवैतत् ।

आढ्यपतिः — अयि ! अमायिजनबहुले देशे धनार्जनं विशेषतः सुकरम् । तदुपायमजानन्तो जना मायां दोषं कथयन्ति पश्य ! मायैव सर्वसम्पदां जनयित्री । मायामेवाश्रित्य नृपती राज्यं वर्तयति । शूरः समरे विजयी सम्पद्यते । किमुत परमशिवोऽपि तस्या एव महिम्ना विश्वं सृजति अतो हेतोर्मायाशब्दस्यार्थनिर्णयः कार्यः । तद्यथा—

या मा सा मायेति हि
माशब्दस्यासदर्थमभिदधते ।
तद्युक्तं तस्यार्थो
लक्ष्मीरित्येव निश्चितो भवति ॥

लक्ष्मीसन्धायकत्वेन मायाशक्तिः सर्वैराराधनीया । अन्यथा ह्यगतिका भवन्ति जनाः ।

दौवारिक :— प्रभो ! आयुष्मतो गुणचन्द्रस्य मित्रं सुधापूर्ण आगच्छति । आज्ञां प्रतिपालयामि ।

आढ्य :— तूर्णं प्रवेशय ।

दौवा :— तथा (इति निष्क्रान्तः)

आढ्य :— गणकसिंह ! त्वम् गत्वा स्वीयं कर्म निर्वर्तय ।

गणक :— तथा (इति निर्गतः)

सुधा :— (प्रविश्य) (स्वगतम्) आश्चित्रमेतत् !

जनकः कटुगुणचटुलः
तनयः किल ललितसुगुणधीरमनाः ।

(विचिंत्य) किं चित्रमत्रास्ति ?

कण्टकितक्षुपतो मृदु
पाटलशुभगन्धि कुसुममुदयति हि ॥

अयन्तु प्रलोभोपहतचेताः । पुत्रस्याविचालितं भाव-स्वातन्त्र्यं जानाति । तस्मात्कुत्रापि स्वाभिमते कार्ये साचिव्यमभिवोढुं मामाहूतवानिति तर्कयामि । (प्रवेश

मभिनीय ) तात ! विनीतः सुधापूर्णोऽभिवादयते । ( इति नमस्करोति )

आढ्य :— ( तं दृष्ट्वा ) चिरं जीव । आसन उपविश ।

सुधा :— ( आसन उपविशति )

आढ्य :— आयुष्मन् ! सुधापूर्ण ! अपि कुशली भवान् ?

सुधा :— तातपादस्याशीःप्रभावात् ।

आढ्य :— सुधापूर्ण ! कुमारस्य गुणचन्द्रस्य मैत्रीवशात् त्वं सुतकल्पो मम । तस्मात् किञ्चित्त्वया मन्त्रयितुमभिलषते मे मनः ।

सुधा :— अनुग्रहः खल्वेषः ।

आढ्य :— आयुष्मन् ! पश्य ।

तारुण्यपूर्णो गुणचन्द्र एष
रत्नाकरो नन्वयमर्थराशिः ।

सुधा :— नात्र सन्देहलवः ।

आढ्य :— वधूर्विधेया खलु चन्द्रिकाभा
यदागमेनायमुपैति वृद्धिम् ॥

सुधा :— ( स्वगतम् ) नूनमयं वरशुल्कमभिप्रेत्य समुपन्यस्यति नास्मा अवसरं दास्यामि । ( प्रकाशम् ) तात ! गुणवती कन्याऽन्वेषणीयेति तव हृद्गतोऽभिप्राय इति तर्कयामि

आढय :— सुधापूर्ण ! न केवलं तत् । किन्तु शुल्कोत्तरमपि काङ्क्षति मनः ।

सुधा :— तात ! भवान् सम्पदि रत्नाकरकल्पः । किमेतैः क्षुद्र धनलाभैः ?

आढय :— आयुष्मन् ! न तथा मन्तव्यम् । शृण्वत्र सत्यम्—

पूर्णेन कोशेन तथा न तृप्येत्
यथा धनाढ्यः परवित्तलाभात् ।
अदृष्टपारोऽपि जलैरुदन्वा
नुल्लासमेत्यल्पतरङ्गिणीभिः ॥

सुधा :— महाभाग ! मित्रस्य गुणचन्द्रस्य चित्तपरिज्ञानेनैवं शङ्कते मे मनः । एतादृशः कन्यासम्बन्धो न रोचते तस्मा इति ।

दौवा :— ( आगत्य ) प्रभो ! द्वौ सुवर्णवस्त्रधारिणौ द्वारि तिष्ठतः कावा आज्ञा ?

आढय :— अवश्यं प्रवेशय ।

दौवा :— तथा ( इति निष्क्रान्तः )

( द्वौ पुरुषौ प्रविशतः )

प्रथम :— गणकमित्र ! शृणु माम् ।

अपि सति पुमपत्ये कन्यकासौख्यहेतोः
कथमपि निखिलार्थं शुल्करूपेण दत्त्वा ।

श्वशुरजनवियातं प्राप्य जामातरं ते
कति जगति गृहस्थाः दुर्भगा यान्ति पीडाम् ॥

द्वितीय :— स्वामिन्नात्र सन्देहः ।

प्रथम :— तथाप्यार्य ! शृणोतु मम मनोगतम् —

गुणवान् खलु विदितो मम
गुणचन्द्रो जगति यशसि जिततन्द्रः
संशास्य शुल्कदाहं
पितुरेनं वरमवाप्तुमुचितं मे ॥

द्वितीयः — तथा करोतु । (प्रवेशमभिनीयाढ्यपतिं दृष्ट्वा)

प्रथमः — महाभग ! विनीतो वन्दे ।

द्वीतीयः — आढ्यपते ! नमस्ते ।

आढ्य :— (तौ दृष्ट्वा) आसने अलंकुरुतां भवन्तौ । (तावुपविशतः)

आढ्य :— किंनामधेयौ भवन्तौ ? किंवा आगमनस्य प्रयोजनम् ?

द्वितीयः — महाभाग ! अयं श्रीपर्वतनामा धनपतिः । अहं त्वेतस्य पत्रव्यवहारी गणकमित्रः । सोऽयं कन्यासम्बन्धार्थी भवन्तं द्रष्टुमागतः ।

आढ्य :— (श्रीपर्वतमुद्दिश्य) अयि ! अभिलषितं वरशुल्कं यदि दीयते तदा सर्वमप्यभिमतं सिध्येत् । धनसाध्यं खल्विदं जगत् ।

श्रीपर्वतः — तत्प्रमाणं प्रतिपादयत्वार्यः।

आढ्य :— अयि! श्रीपर्वत! शृण्वत्र सत्यार्थम्।

गुणचन्द्रः कलापूर्णः स्वर्णपूर्णाश्च कोष्ठकाः।
येन मे हृदयं पूर्णं भवेत्तद्दातुमर्हसि॥

सुधा :— (स्वगतम्) न केनापि पूर्णता संभवति तथाहि —

कालस्य जीवैरुदकैर्महाब्धेः
काष्ठैः कृशानोर्ग्रहतारकाभिः।
रोदः कटाहस्य च पूरितस्स्यात्
कुक्षिर्न लुब्धस्य तु हेमभारैः॥

श्रीपर्वतः — प्रमाणं विशदयन्तु।

आढ्य :— श्रीपर्वत! शृणु मदीप्सितम्। अयुतं सौवर्णमुद्रिकाः वरशुल्कस्य प्रमाणम्।

श्रीपर्वतः — महाभाग! दुर्भरोऽयं शुल्कभारः। सङ्ख्याह्रासेन प्रतिपत्तिं करोतु महाभागः।

आढ्य :— भवतो मुखं दृष्ट्वा प्रथममेव मया सङ्ख्यायामल्पीयसी मात्रा प्रदर्शिता। यद्यङ्गीकारः स्यात्तर्हि प्रवृत्तिः क्रियतां। नोचेद्यथागतं निवृत्तिरेव शरणमाश्रियतां।

श्रीपर्वत : — (अपवार्य) सखे! गणकमित्र! एकपुत्रविषयोऽयं सम्बन्धः। वरस्तु गुणवान्। प्रभूततमा च वित्तसम्पत्तिः। शुल्कभारस्य दुर्भरत्वेऽपि कन्यासुखापेक्षया तमङ्गीकरोमि

द्वितीयः — तथैव क्रियताम् ।

श्रीप :— ( प्रकाशम् ) भवतामभिलाषमनुसृत्य वैवाहिकोऽनुबंध स्थिरीक्रियताम् ।

आढ्य : — श्रीपर्वत ! प्रधानशुल्कं त्वेतत् । अपरं चायुष्मतो मणिमयो भृङ्गारः प्रकोष्ठे नवरत्नमालाचापेक्षिता भवति ।

श्रीप :— ( निर्विण्णवदनः ) तथा ( इत्यङ्गीकरोति । )

आढ्य :— अयि ! श्वश्रूहरणादिकं लोकसाधारणं खलु ।

श्रीप :— ( शिरःकम्पेन स्वाभिमतं सूचयति )

आढ्य :— एकं प्रार्थितमवशिष्टमस्ति । किं तदिति चेत् ? उभयत्र वैवाहिकोऽर्थव्ययभारो भवद्भिरेव वोढव्यः ।

श्रीप :— ( अपवार्य ) गणकमित्र ! जीविकाशेषमपि जिघृक्षतीवास्तेऽयमाढ्यपतिः ।

द्वितीयः — पशुं क्रीत्वा कण्ठरज्जुविषये प्रलोभोऽनुचित इति मन्ये ।

श्रीप :— तथा ( इति क्षीणस्वरेण प्रतिवक्ति )

आढ्य :— तर्हि शुल्कव्ययस्य चतुर्थांशोऽप्येव दातव्यः ।

श्रीपर्वतः — तथा ( इति द्रव्यपेटिकां ददाति )

आढ्य :— ( गृहीत्वा ) एतावता प्रसङ्गेन वैवाहिकः सम्बन्धः सुबद्धो जातः । योग्यतिथिं चाचिरेणैव कालेन निश्चित्य लेखं विसर्जयिष्यामि ।

श्रीप :— तर्हि गच्छामो वयम्। आज्ञां ददातु (निष्क्रान्तौ)

आढ्य :— (श्रीपर्वतं पुनराह्वयति) (श्रीपर्वतः पुनः प्रविशति)

आढ्य :— महाभाग ! विस्मृतवानहम् तेषु वैवाहिकदिवसेषु मम नश्वमूल्यमपि भवद्भिरेव वोढव्यमिति माविस्मरतु भवान्।

श्रीपर्वतः —(विहस्य) अकथितमपि तत्तथाविधमेव भविष्यतिखलु (इत्युक्त्वा निष्क्रामन्)

सर्वं खल्वपि वित्तमार्जितमहो! पित्रेऽस्य शुल्कात्मना
दत्त्वा योग्यवरोद्य लब्ध इति मे चित्तं चिरान्निर्वृतम्।
एवं श्राम्यति चेन्मनो मम तदाप्तावेककन्यापितुः
प्रोत्ताम्यन्ति कथंनु तद्बहुलताभारेऽन्यसंसारिणः॥

(इति निष्क्रान्तौ)

आढ्य :— आयुष्मन् ! सुधापूर्ण ! लोकवादोऽयं यथार्थः। तद्यथा

प्रियः परिणयः स्वस्य पुत्रस्य तु विशेषतः।
कृतार्थं मन्यते जन्तुः स्वात्मानं तदद्वयाप्तितः॥

पुत्रस्योद्वाहप्रसङ्गेन मदीयोऽन्तरात्माऽमृतह्रदे कृतावगाह इवाद्वितीयमानन्दमनुभवति।

सुधा :— (आत्मगतम्) अपारशुल्कलाभेनेति वद।

आढ्य :— त्वं त्वरिततरं गत्वाऽऽयुष्मतेऽयं कन्यासम्बन्धो यथा रोचिष्यते तथा प्रयतस्व।

सुधा :— तन्मतिमनुसृत्य यथाशक्ति प्रयतिष्ये।

आढ्य :— श्रेयो भविष्यति। गम्यताम्। (इति यवनिकान्तर्गत

सुधा :— अहो! अतितृष्णता लुब्धस्य।

तुलयति खलु चित्तं चाणुना हेतुवादी
कृपणहृदयमेतद्धेतिना तोलयामि।
न भवति यदि जीवान् भूरिसङ्ख्यान् ग्रसित्वा
कथमयति न तृप्तिं स्वीयदाहातिरेकात्॥

अहो! मूढोऽयमर्थपतिः पुत्रस्य स्वातन्त्र्यं जानन्
कथमपथेन प्रयाति! अतएवमं कन्यासंबन्धं सखा गु
चन्द्रोऽवश्यं विरक्तो भवेत्। तथाहि —

सख्युर्मनो धीरमपि प्रकामं
विरंक्ष्यते दुर्भगसंगतेन।
क्षीरं कथं स्याद्विरसं नहि द्राक्
क्षाराणुसंगादपि भूरिमानम्॥

(इतिनिष्क्रान्तः)

इति महीधरोपाध्येन वेङ्कटरामशास्त्रिणा
विरचिते सरोजिनीसौरभे नाटके
द्वितीयोऽङ्कः।

# श्रीसरोजिनीसौरभे

## तृतीयोऽङ्कः



परिचारक :—

धूर्तो भवेन्नाम पिता प्रकृत्या
तदंशभूतस्तु सुतो हि सौम्यः।
लब्धात्मलाभोऽपि विधुः खरांशोः
प्रीणाति लोकं किरणैर्मनोज्ञैः॥

अहो! आयुष्मतो गुणचन्द्रस्य गुणोदारता यत्प्रार्थित-मात्र एव (अत्रान्तरे परिचारिका प्रविश्य)

परि :— भाव! किमिदमेकाकी त्वं भ्रष्टमतिरिवान्तर्जल्पसि?

परि :— वृषस्यन्ति! अभिसारिकेव त्वरिततरं कुत्र गच्छसि? क्षणं तावत्तिष्ठ वक्तव्यविशेषोऽस्ति।

परि :— कोऽनु खल्वेष विशेषः?

परिचारकः — भामिनि! आढ्यपतिः परमकृपणोऽपि कुमारस्तु उदारमतिः।

परि :— तथैव जनश्रुतिः।

परि :— नकेवलं सा किंतु प्रत्यक्षीकृतोऽयं विषयः।

परि :— कथं नु खल्वेतत्?

  

परि :— मुग्धे ! अद्य प्रातः कस्मैचन दीनजनाय प्रार्थनास
कालमेव प्रभूतं धनं दत्तवान् ।

परिचारिका :— मूर्ख ! गृहस्वामिनमाढ्यपतिं दूषयसि । त
दण्डितं कारयिष्यामि । ( इत्यंगुल्या तर्जयति )

परिचारकः — ( भीतिं नाटयन् ) आयुष्मति ! नेदं दूषणं किं
प्रत्यक्षीकृतोऽयं विषय इति त्वां चात्मीयां मत्वा श्रव
गोचरीकृतः । क्षमस्व । न कदाप्यन्तर्गृहेभ्यः कथ्यताम
विषयः । अन्यथा मम वहिष्कारो भवेत् । उभावप्या
सजातीयौ परिचर्याजीविनौ च । ( इति तस्याः पा
स्पृशति )

परिचारिका :— ( विहस्य ) अवहेलनमात्रमेतत् । एतावन्मात्रे
विभेषि । पुरुषाकृतिः स्त्रीव दृश्यसे ।

परिचारकः — अयि बाले ! सुन्दरीणां परितर्जनेन को वा पुमा
न बिभीयात् ? पश्य —

पुंभावगम्भीरतरोऽपि पूरुषः
स्त्रीतर्जनीचालनतः प्रवेपते ।
किं दारुखण्डः सुमहान्नकम्पते
स्रोतस्विनीसूक्ष्मतरोर्मिरेखया ॥

भवतु सुन्दरि ! कैयं त्वरा भवत्याः ?

परि :— भाव ! आयुष्मतः कुमारस्योद्वाहविधिः स्वामिन
निश्चितः । शुभतिथिपरिशीलनाय कुलगुरुं देवव्रतमाने
प्रस्थिताऽस्मि ।

परिचारक :– गच्छ बाले! आवामपि माङ्गल्यवैभवमनुभविष्यावः

( परिचारिका गता )

परिचारकः — ( पुरोऽवलोक्य ) पुरःशालामधिगच्छति कुमारः अहमपि विहितकर्मपरो भवामि । ( इति निष्क्रान्तः )

( इति प्रवेशकः )

(ततः प्रविशति केनचन मित्रेण किमपि संलपन् गुणचन्द्रः)

गुण :— सखे ! सुमते ! किमन्यदत्र वक्तव्यम् ?

सुधायां माधुर्यं सुकविवचने व्यङ्ग्यविभवः<br>
सुधांशौ सौभाग्यं मनसिजशरे मोहपटुता ।<br>
तथा सिद्धे मन्त्रेऽखिलजनवशीकारमहिमा<br>
दृशः कोणे सर्वं मधुरवपुषां चञ्चलदृशाम् ॥

सुमति :— (स्वगतम्) न कदापि श्रुतः खल्वीदृशः स्त्रैणकथा-प्रसङ्गोऽस्य मुखात् (प्रकाशम्) सखे! अधीरस्य जनस्य तथाविधमेव तत् संभवति ।

गुण :— सुमते! सत्यमत्र शृणु । धैर्यवतोऽपि यूनस्तद्विभञ्जकः खलु रमणीनामपाङ्गलीलाविक्रमः। अत एव परां शक्ति मामनन्ति लोकमर्मज्ञाः स्त्रीव्यक्तिम् । पुराणपुरुषा अपि कां कां विक्रियां नान्वभवन् स्त्रैणशक्तिविमोहिताः ?

सुम :— तरुणभावप्रभावः खल्वेषः !

गुण :— सखे ! यद्यदाचरितं सरोजिन्या तत्सर्वं मामुद्दिश्यैवेति निश्चिनोमि। तद्यथा—

मोहेऽपि स्वकरेण गाढमनया यन्मे करः संहितः<br>
श्रुत्वा मद्वचनं स्मितं कृतमभूत्प्रासङ्गिकं चापि यत् ।

प्रस्थाने कथितं यदार्यसमुचादाराञ्चमस्ते वचो
यन्नेत्रान्तविलोकितं च मयि तत्सर्वं रतेश्चेष्टितम् ॥

(किञ्चिच्चिन्तयित्वा विहस्यच)सखे ! सर्वोहि जन्तुः प्रकृत्या संभूतमपि रमणीयं भावपदार्थं स्वार्थमेव मन्यते । विशेषतस्तु प्रेमजगति — पश्य —

चूतं पल्लवितं स्वमेव कलयन्कूजत्यहो कोकिलो
वल्लीं पुष्पवतीं तथा मधुमतीं भृङ्गोऽभितो भ्राम्यति ।
तारुण्यं नवमञ्जरीव सुभगं सौन्दर्यलीलाञ्चितं
नारीणामवलोकयन्नवयुवा किं वा न वा गायति ॥

एवमवगतलोकवृत्तान्तोऽपि प्रेमभावादस्माद्विरन्तुं न शक्नुयाम्

सुमतिः — सखे ! गुणचन्द्र ! यो हि कन्यासम्बन्धः पर्युपन्यस्तो मया सोऽपि परिग्राह्य एवेति त्वं तमपि परिचिन्तयेति चाभ्यर्थये ।

गुण :— मित्र ! यदि नान्यथा भवान्मन्यते तह्यत्र सत्यं ब्रवीमि श्रूयताम् —

तदमलमुखशोभास्फारपूरे प्लवित्वा
मुकुरनिभकपोलं प्राप्य चास्रंसमाना ।
अवशहृदयवृत्तिस्तत्प्रभावर्तरूपे
स्मितकृतनतभागे भ्राम्यतीवाधुनापि ॥

तेन तस्यामेव लग्नं मनो न शक्नोमि निवर्तयितुम् । ( मित्रस्य हस्तं गृहीत्वा ) त्वद्वचनानङ्गीकारदोषमिममेकं ताव त्क्षमस्व । आवयोः सख्यन्तु तथैव तिष्ठतु । गच्छतु भवान् ।

सुमति :— (निष्क्रमन् स्वगतम् ) परिचिन्तितं मया बन्धुकार्यं

तथाऽपि धीरोऽयं युवा प्रार्थयते तरुणीमन्याम् । न न्विवर्तयितुं शक्यते । युवधीराणामेष स्वभावोहि तद्यथा —

न खलु कृतकशोभाकृष्टचित्ता भवन्ति
प्रविमलगुणभूषाः कामिनीः कामयन्ते ।
निखिलसुखनिदानं ताः समालोच्य धीरा
नियमितनिजचित्तास्ताभिरेवारमन्ते ॥ (निष्क्रान्तः)

परिचारकः :— (आगत्य) स्वामिन्! सुधापूर्ण आयाति कावाज्ञा ?

गुण :— अवश्यं प्रवेशय ( गतः परिचारकः )

सुधा :— ( प्रविश्य गुणचन्द्रं दृष्ट्वा ) ( आत्मगतं ) प्रकृति गम्भीरोऽपि विक्लवमना इव दृश्यते मे सखा अस्य हि—

आनन्दरेखापगमेन किंचि
द्विवर्णतां याति मनोज्ञमास्यम् ।
कृष्णे तु पक्षे प्रथमे यथाऽहि
विम्बं विधोरेककलाविलोपात् ॥

अपि नामायं शुल्कवृत्तान्तः कर्णगोचरीभवेत् ?
( प्रवेशमभिनीय ) मित्र ! गुणचन्द्र ! किमिदमेकाकी तिष्ठसि ?

गुण :— (तं दृष्ट्वा ) सखे ! सुधापूर्ण ! स्वागतं ते उपविशासने

सुधा :— ( आसन उपविश्य ) सखे ! विमना इव दृश्यते भवान् किं वात्र कारणं स्यात् ?

गुण :— न कोऽपि विशेषः । किमर्थमाहूतो भवांस्तातपादैः ?

सुधा :— उद्वाहविधिर्निर्वर्तनीयः सख्युरिति ।

गुण :— केयं त्वरा तदर्थं तातपादस्य ?

सुधा :— उचितं वय इति।

गुण :— तदर्थोऽयं यत्नः पितृपादस्य नोचित एवेति मन्ये।

सुधा :— विवाहविषय एव तव विमुखताऽस्तीति तर्कयामि।

गुण :— सखे ! कोवा युवा नापेक्षते तमुत्सवविशेषम् ? पश्यात्र नित्यसत्यं वचः। तद्यथा —

> इन्दुस्पर्धिमुखस्य जीवितरहस्यं रागविस्फारितं
> मन्दाक्षेण विकुञ्चितं सुरभिणा हासेन संदानितम्।
> भाव्यानन्दमयस्य जीवितमहावृक्षस्य सूक्ष्माङ्कुरं
> कोवा कांक्षति नो युवा नववधूनेत्रान्तसंचालितम्॥

सुधा :—तर्हि पितुस्तदर्थोऽयं यत्नः किमर्थमनुचितो भवति ?

गुण :— सखे ! सत्यं ब्रवीमि तादृशः प्रेमानुबन्धो नितरा मनितरसाध्यः किन्तु तदनुभोक्तृसाध्य एवेति पश्य—

> पुंभावेन पुमर्थयोजनविधादक्षेण साक्षाद्युवा
> मुग्धाङ्गैरपि विश्वमोहनकलावासैर्विलासैर्वधूः।
> कर्षन्तौ हृदयं मिथो बलवता यत्नेन यत्प्रेमसं-
> बध्नीतस्तदवेहि चान्तरमतोन्यत्कृत्रिमं सान्तरम्॥

सुधा :— सखे ! वरशुल्कविषये भवदाशयः कीदृशः ?

गुण :— शुल्कस्तु विषसंसर्ग एव प्रेमामृतस्य।

सुधा :— शुल्कसंपदं गर्वकारणं मन्यन्ते नन्वद्यतनाः ?

गुण :— नैवं वक्तुं युक्तम्। सतु शुल्कभारस्तत्पित्रादिभिरेव कांक्ष्यते नतु युवमित्रैः पश्य—

यौवने भवति नो धनकांक्षा
वार्धकस्य खलु सा निजचिह्नम् ।
धीरभावकलितं तरुणत्वं
भीरुभाववलितं स्थविरत्वम् ॥

अयमपि विचारहेतुः । तद्यथा—

देशे यत्र तपोधना इति जनाः पूर्वं प्रथामार्जय
न्नेवं मानयशोधना इति च निर्वर्त्याद्भुतं कर्म यत् ।
त्यक्त्वाऽनैव मनःसमुन्नतिमिमे ते भारतीयाः कथं
ज़ाताः शुल्कधना इति ह्रियमुपेत्याहो ! मनो दूयते ॥

cursing of दहेजप्रथा

किंच प्रेयसीषु यूनां प्रवृत्तिः सरसा सुकुमाराच भवति यथा

त्यक्त्वा पक्षहतिं; विहाय विरसं शब्दं; मृदुस्पर्शनं
पादेनाप्यभिमत्य; राजससमुद्रेकं नकिंचिद्वहन् ।
भ्राम्यंस्तद्गतिमाकलय्य; मृदुतामालक्ष्य; भृङ्गो यथा
पुष्पं; प्रेमरसैकधीर्नववधूं भुंक्ते युवा सादरम् ॥

तेन तत्पक्षभूताभ्यां युवभ्यामेव निर्वाह्ये तस्मिन्नुद्वाहमङ्गल
विधौ माध्यस्थ्यमन्येषां न युक्तम् ।

सुधा :— (स्वगतम्) नूनमनेन निराकरिष्यते पित्रनुमतः संबन्धः । तथाऽपि तदनुमोदाय प्रयतिष्ये (प्रकाशं) मित्र ! मया निवारितोऽपि पितृपादः कञ्चन शुल्कोत्तरं कन्या-संबन्धं निरणैषीत् । स माननीयस्त्वयेत्यभ्यर्थये ।

गुण :— सखे ! आस्तां तावत्तत्सर्वम् मयातु पूर्वमेव कस्यांचन युवत्यां सक्षितं मनः ।

सुधा :— (आत्मगतम्) यात्वनेन गजपीडनाद्विमोचिता सै सरोजिनी प्रेमविषयोऽस्येति तर्कयामि (प्रकाशम्) मि सा तरुणी सौन्दर्यं कलालालित्येच ललनाललामभूतें निश्चिनोमि यतो भवन्तमप्याकर्षति ।

गुण :— सखे ! स्त्रीणां सौन्दर्यं गृहीतृभेदाद्भिन्नं भवति तद्य कश्चिद्देहस्य कान्तिं चिकुरकुटिलतां कश्चिदायाममक्ष्णो कश्चिन्नासानुपूर्वीं शुचिरदसरणिं कश्चिदास्यप्रसादम्। कश्चिद्भ्रूयुग्मशोभां कटितटविपुलत्वंहि कश्चिद्द्वयोऽङ्ग- प्रागल्भ्यं स्वस्ववाञ्छामनु बहुमनुते चारुतेत्यङ्गनानाम्

एष तु मम निर्णयः यथा—

इष्टेऽप्यर्थे जगति सततं वृत्तिरावर्तिताचे-
न्नूनं स स्याद्धतरुचिरसाविन्द्रियाणां स्वभावः।
यस्मिन्दृष्टे मुहुरपि गुणैर्भूषितत्वात्समग्रै-
स्तारामैत्री न शममयते तद्धि रूपं मनोज्ञम् ॥

परि :— (त्वरिततरमागत्य) स्वामिन् ! पिता कुलगुरुश्चा च्छतः (इति निष्क्रान्तः)

गुण :— सखे ! किंवाऽत्रागमनकारणं भवेत्पितृपादस्य ?

सुधा :— आत्माभिप्रायं प्रकटीकर्तुमेवागच्छतीति मन्ये। (आढ्यपतिः कुलगुरुश्च प्रविशतः। गुणचन्द्रः सुधापूर् श्चोत्थाय प्रणमतः)

आढ्य :— कुमारौ चिरं जीवताम्।

कुलगुरु :— उभावप्यायुष्मन्तौ श्रेयसा वर्धेताम्। कुमार गुणचन्द्र ! भवन्तमुद्दिश्य किमन्यदाशास्यमस्ति? यतोहि

सरसं तेऽन्तरं नादो धीरः सौम्यं वपुस्तथा ।
पत्नीं प्राप्नुहि प्रावृट्सु जीमूतो ह्लादिनीं यथा ॥

(आढ्यपतिं दृष्ट्वा) आढ्यपते! भवानेव जगति भाग्यवता-मग्रसरः यतोहि —

विद्याविनयसंपन्नः शीलवान् रूपवानपि ।
गुणचन्द्रः पुष्कला श्रीः कोऽन्योऽस्ति भवता समः ॥

आढ्य :— भवतामाशीःप्रभावविलसितमिदम् ।

गुण :— (कुलगुरुमुद्दिश्य) गुरो! शिष्याणां विद्याशीलयोरपि गुरव एव निदानं भवन्ति ।

कुल :— आयुष्मन्! शिष्याणां विद्यावत्त्वे गुरवो निमित्तमात्रं भवन्ति शिष्या एवात्मीययोग्यतामधिकृत्य प्रधानकारणं भवन्ति तद्यथा —

धीरश्छात्रो रहसि निवसन्दुष्टवायोश्चदूरे
विद्यातैलं शुचिमुखगुरुस्नेहपात्रात्प्रपन्नः ।
युक्त्याऽऽचूषेद्यदि विमलया बुद्धिवर्त्या तदन्त
र्दिव्यं ज्योतिर्जगति विकिरन् ज्ञानदीपोऽभ्युदेति ॥

आढ्य :— कुलगुरो! चिरान्निर्वृतं मे हृदयम् येन कुमारस्यो-द्वाहमङ्गलार्हं वयः समुपपन्नमिति यतः —

अनपत्यो व्रतशतं कृत्वा पुत्रमवाप्नवम् ।
वधूग्रहणमाङ्गल्यं द्रष्टुमुत्सहते मनः ॥

कुल :— अचिरमेवेष्टावाप्तिरस्तु ।

आढ्य :— (अपवार्य) सुधापूर्ण! किमायुष्मताऽङ्गीकृतोऽयम् कन्यासम्बन्धः ?

सुधा :— तात ! भवानेव प्रत्यक्षतो जानातु ।

आढ्य :— ( गुणचन्द्रमुद्दिश्य ) आयुष्मन् ! परेद्युरुद्वाहमङ्गल-
शोभनो मुहूर्तः कुलगुरुणा निर्धारितः । सज्जो भव ।

गुण :— मदनुमतिमनपेक्ष्यैव, अपि सर्वं निश्चितं भवद्भिः ?

आढ्य :— पुत्रक ! भवदभिमतमनुसृत्यैव सर्वं निर्वर्तिष्यते ।

गुण :— तात ! कन्यावरणे वरस्यैव प्रधानपात्रता, अन्येतु
करणमात्रमिति मन्ये ।

आढ्य :— स्वर्णपूर्णा कन्यका भाग्यवशादुपलब्धा ।

गुण :— तातपादैः स्वर्णपूर्णतैवापेक्ष्यते । मया तु सुवर्णपूर्णता
गुणपूर्णता च प्रस्तूयते ।

आढ्य :— तदपि मयाऽऽद्रियते ।

गुण :— पितः ! पश्यतु प्रेयोधर्मं त्रिकालाबाधितम् । यथा—

केचिद्रत्नादिहारैर्मृदुसुरभिसुमरबद्धमाल्यैस्तु केचित्
केचिन्निश्श्वासहार्यैरनुपमवसनैर्वल्कलैरेव केचित् ।
केचिद्वीर्यावदानैश्श्रवणसुखकरैर्भाषणैः केचिदेवम्
सर्वे सामर्थ्ययोगान्नवयुवतिमनस्तोषणे बद्धदीक्षाः ॥

किंच —

स्वां स्वां प्रियां प्रीणयितुं जगत्यां
प्रयत्नवन्तो मृगपक्षिणोऽपि ।
एवं स्थिते ज्ञानविशिष्टमर्त्या
मिथ्या चरन्तीति विचारहेतुः ॥

आत्मावमाननादात्मीयावमाननं दुःसहमिति शुल्कभारप्रार्थ-
नया कन्याबन्धूनवमन्येत । तेन पीड्यन्ते चिरं मानवत्यः

आढ्य :— भवतु गौरवभङ्गभिया मम निश्चितमनुपालयितव्यं पुत्रकेण।

सुधा :— (स्वगतम्) शुल्कहानिभियेति वद।

गुण :— प्रेमभङ्गभीतिर्मामपि बाधते।

आढ्य :— अन्या प्रेयसी भवताऽभिलष्यत इत्यनेन ज्ञायते।

गुण :— मनस्तु लग्नमन्यत्र।

आढ्य :— स्वातन्त्र्यमवलम्बसे ?

गुण :— अस्मिन्नेकस्मिन्नेव विषये।

आढ्य :— तर्हि मामपि वित्तराशौ स्वतन्त्रमवेहि।

गुण :— आर्यस्य हृदयमेव प्रमाणमत्र।

आढ्य :— शृणु मम निश्चितम्।

यथा स्वतन्त्रस्तव निश्चितस्य
तथाऽहमप्यार्जितवित्तराशेः।

सुधा :— (स्वगतम्) हन्त! मूर्खोऽयमर्थपतिः। अर्थराशिमेव स्वार्जितं मन्यते न तु पुत्रम्।

आढ्य :— मदीप्सितं त्यक्तुमना यदि स्याः
मयाऽऽर्जितं स्वर्णमपि त्यजेस्त्वम्॥

कुल :— परां काष्ठामधिरूढोऽयं विवादः। (गुणचन्द्रं दृष्ट्वा) आयुष्मन्ननुमन्यस्व वृद्धस्य पितुर्वचनम्।

गुण :— कुलगुरो! एकमिदमपहाय सर्वमन्यच्छिरसा धार्यते। यतो हि—

छाया विश्रमकारिणी; चिरपिपासाहारिणी सत्प्रपा;
पाथेयञ्च रसाधिकं; कलकलारावो मिलत्पक्षिणाम् ।
मृद्वी संहतपादुका; श्रमपयश्शोषी मरुद्दाक्षिणः;
पुंसस्संसरतो मनोज्ञगृहिणी संसारदूराध्वनि ॥

अतोऽत्र विषये ममैवात्मा प्रभवति ।

कुल :— (आढ्यपतिमुद्दिश्य)आढ्यपते ! भवानेव वा (इत्यर्धोक्ते

आढ्य :— मम निश्चितं कदापि नान्यथा भवितुमर्हति ।

गुण :— तर्हि पितृचरण ! श्रूयतां मद्विनीतवचनम् ।

नाहं वृणे तात ! कदाचिदर्थं
त्वदुक्तरीत्या भवदर्जितं तत् ।
पुपोषिथाद्यावधि यत्कृपात
स्तदर्थमंघ्रिं भवतः स्पृशामि ॥

(इति पितुः पादौ स्पृशति )

आढ्य :— (कोपेन पुत्रमवधूय गतस्तेनसह कुलगुरुश्च)

गुण :— मित्र! सुधापूर्ण ! त्वमपि गच्छ अहमद्यैकाकी संजातो
किंचनश्च ।

सुधा :— सखे ! मां तु संपत्सहचरं समर्थयसे ?

गुण :— नहि तथा । किन्तु विकलतया विश्रान्तिमपेक्षते मे मन
इति । (आलोचनामभिनीय) सखे ! अहन्तादोषदूषितोऽयं
लोकः । पश्य —

मठाधिपत्ये भूराज्ये सम्पत्सु च रजोजुषां ।
दृश्यते नियतो वासो ह्यधिकारविकारयोः ॥

किञ्च —

न दूये सम्पदां हानेर्नदूये दुःखसङ्गतेः ।
दूयेऽहं केवलाद्वित्तसंमोहात्पितुरुत्कटात् ॥

परिचारक :— (आगत्य) स्वामिन् ! अम्बाऽऽगच्छति (इतिगतः)

गुण :— सखे ! वृत्तान्तमिममाकर्ण्य प्रकृतिवत्सला जननी मामाश्वासयितुमागच्छतीति मन्ये । अहो ! मातृवत्सलता सर्वोत्तरा खलु ।

ज्ञाते कुक्षिमुपागते सुमुखता; मोदो मनाक्स्पन्दिते;
जाते जन्मकृतार्थता; परवशीभावो गिरामुद्गमे; ।
प्राणा एव पणो विपत्सु; समताऽभावो हि रूपादिषु;
ज्यायस्त्वेऽपि शिशुत्वभावनमहो! मातुस्सुते स्निग्धता ॥

अम्बा :— ( प्रविश्य )

भर्ता च विश्वस्तनयो विनीतो
वधूः सुरूपा वचने स्थिता च ।
माङ्गल्यमायुः समकालमेत
च्चतुष्टयं स्त्रीजनपुण्यलभ्यम् ॥

श्रुत्वा चेमं पितापुत्रसंवादमुद्विग्नमनाश्चाभवम् । भर्ता च धनलोलुपः । सुतस्तु विनीतोऽपि स्वातन्त्र्यचरः । धनस्य प्रभूतत्वेन वरशुल्कापेक्षित्वं नोचितमेव भर्तुः । मम वचनमश्रद्धेयं तस्य । नववधूग्रहणे स्वातन्त्र्यं समुचितमेव आयुष्मतः । अत्र संकुलस्थितौ किं करोमि ? उद्विग्नमनसं कुमारं सान्त्वयितुमेव साम्प्रतं मम । (पुरोऽवलोक्य)

अत्रैव तिष्ठति। (इति पुत्रसमीपं गच्छति) (गुणचन्द्रः सुधापूर्णश्चोत्थाय 'मातर्वन्दे' इति नमस्कुरुतः)

माता :— कुमारौ सुखेन वर्धताम्!

सुधा :— अम्ब! कुतः सुखं पितृवर्जितस्य कुमारस्य?

माता :— (पुत्रमुद्दिश्य) पुत्र! सर्वं श्रुतं मया। अन्यत्सर्वं तथा तिष्ठतु। (कुमारं हस्तेन स्पृशन्ती) जात! त्वामद्य दुर्गतं मा मन्यस्व। मातृदत्तस्य मम वित्तस्य त्वमेवाधिकारी।

गुण :— मातः! न खलु जीविकामुद्दिश्य विचारलेशोऽस्ति किन्तु पितुः शाठ्यमनुचिन्त्य दुःखमुत्पद्यते।

माता :— कुमार! अलं परिदेवितेन। मयि जीवन्त्यां न कदापि त्वमन्यथा वर्तेथाः। त्वन्मतिमनुसृत्य मदीयं वित्तमुपभुंक्ष्व। अन्यथा मम प्रणा न प्रचलन्ति (इत्यश्रूणि मुञ्चति)

गुण :— जननि! नाहमन्यथा वर्तिष्ये मा विषीद (इति तस्याः पादौ स्पृशति)

माता :— पुत्र! गृहाण (इति स्वर्णपेटीं ददाति। कुमार! गच्छामीति निष्क्रान्ता)

गुण :— सुधापूर्ण! पश्य मातुर्वत्सलताम्।

सुधा :— अत एव मातरं परां देवतां कथयन्ति विज्ञाः।

गुण :— सखे! त्वमपि गच्छ विश्रान्तिमपेक्षते मनः।

सुधा :— तथेति निष्क्रान्तः।

गुण :— पितृपरित्यक्तं मां श्रुत्वा कदाचित्सरोजिनी न वृणीयात्। तथाऽपि मनस्ततो निवर्तयितुं न प्रभवामि। गुणललामभूता सा नान्यथा वर्तिष्यते। यतोहि —

प्राभवं संपदो नैव कारणं प्रेमसङ्गतेः।
सर्वानतीत्य बध्नाति स्त्रीपुंसौ हृदयं समम्॥

परिचारकः — ( आगत्य ) महाभाग! काचन तरुणी पत्रं दत्त्वा निष्क्रान्ता। ( इति पत्रं ददाति ) ( गुणचन्द्रः पत्र मुद्घाट्यान्तर्वाचयित्वा हसितवदनः) कृतज्ञतासूचकमपीदम् पत्रं सरोजिन्याः प्रभूततरमनुरागं प्रकटयति।

अत्याहितेषु कालेषु खिन्नचित्तस्य देहिनः।
प्रेमैकरससंसिक्तं वाक्यमेकं रसायनम्॥

(इतिनिष्क्रान्तः)

इति महीधरोपाह्वयेन वेङ्कटरामशास्त्रिणा
विरचिते सरोजिनीसौरभे नाटके
तृतीयोऽङ्कः।

# श्रीसरोजिनीसौरभे

## चतुर्थोऽङ्कः

—□—

भ्रमरिका :— ( प्रविश्य ) आढ्यपुत्रो गुणचन्द्रो गृहं परित्यज्य अन्यत्र गतवानिति ( इत्यर्धोक्ते )

कलहंसिका :— ( आगत्य ) सखि ! भ्रमरिके ! त्वमेकाकिनी कुत्र गच्छसि ?

भ्रम :— कलहंसिके ! अद्यैव प्रियसख्याः सरोजिन्या जन्मदि महोत्सवाह्वानाय लेखमार्यस्य गुणचन्द्रस्य हस्ते प्रापयि महं गता । केनापि कारणेन स विक्लवमना गृहं परित्यज्य वानिति परिचारकमुखादवगम्य वृत्तान्तमिमं प्रियसखीं निवेदयितुं प्रस्थितास्मि ।

कल :— सखि ! सर्वमङ्गलामाराध्य धात्र्या सह देवायतनात् प्रतिनिवर्तमाना सरोजिनी कुमारगुणचन्द्रेण गजपीडना द्विमोचितेति मृतोत्थितेव सा प्रतिभाति ।

भ्रम :— नात्र सन्देहः ।

कल :— भ्रमरिके ! सरोजिन्याः प्रत्यङ्गं नवयौवनेन विभूषि सत्कुसुमितमिव प्रमदवनं हृदयङ्गमं वर्तते । को वा तद भोक्ता भवितुमर्हतीति मन्यते भवती ?

भ्रम :— पित्रोरनुरूपवराभिलाषो लोकसाधारणः खलु । सत्यपि सरोजिन्याः सौरूप्यादिके गुणविभवे सदृशवरलाभोऽद्य काले दुरधिगमो वर्तते ।

कल :— न तथाऽहं मन्ये । स्त्रीरत्नभूतां तां गन्धर्वादयोऽप्यपहृत्य परिणेतुमभिलषेयुः किमुत मर्त्याः ! पश्य —

> नरेषु देवेषु च रूपगर्वितः
> पुमान्यदि स्यात्सविधे तया विना ।
> स चन्द्रिकाशून्यतनुः सुधाकरः
> सुमैर्विचित्रैर्विधुरः सुमाकरः ॥

भ्रम :— सत्यमाभाषे । पित्रोर्मनोगतमाशयं न जाने । सख्यास्तु मनो गुणचन्द्रगतमिति तत्सम्भाषणादिनाऽवगम्यते ।

कल :— सखि ! समुचितोऽयमुद्योगो यदि सफलो भविष्यति तर्हि तदीया रूपलावण्यादिसृष्टिर्विधातुः सफला स्यात् पश्य —

> रूपलावण्यमेतस्यां तस्मिन् गम्भीररूपता ।
> तयोः सङ्गः शुभंयुः स्यान्नीतिपौरुषयोरिव ॥

भ्रम :— सखि! अहमपि तथैवाशङ्के। अत्येति कालः। गृहोद्याने मां प्रतीक्षमाणा तिष्ठति प्रियसखी। त्वरिततरं गच्छामि
(इत्युभे निष्क्रान्ते) (इति विष्कम्भः)

(ततः प्रविशति सरोजिनी भ्रमरिकाच)

सरो :— भ्रमरिके ! कस्तत्र विशेषः ?

भ्रम :— सखि ! गुणचन्द्रः केनापिवाकारणेन विक्लबमना अन्यत्र गत इति परिचारकमुखाद्विज्ञाय तन्निवेदयितुमागतास्मि ।

सरो :— किंवाऽस्याऽद्वैकल्यस्य कारणम् ?

भ्रम :— सूचनामात्रेणोक्तं परिचारकेण पितापुत्रयोरुद्वाहविधि-मधिकृत्य मतिभेदः समजनीति।

सरो :— (आलोचनामभिनीय) कृपणोऽयमाढ्यपतिः। कुमार-स्तूदारमतिः। शुल्कलोभेन तस्यानभिमतकन्यादर्शी स तु पितेति तर्कयामि।

भ्रम :— युज्यते कल्पना।

सरो :— भ्रमरिके! कदाऽपि दृष्टस्त्वया स नवयुवा ?

भ्रम :— एकदा क्रीडोद्याने।

सरो :— अभिमतरूप इति मन्यते भवती ?

भ्रम :— तथैव। तव प्राणद इति विशेषतश्च।

सरो :— भ्रमरिके! किंवा वक्तव्यमन्यदत्र ? अस्य शरीरस्य स एव हि प्राणदाता।

भ्रम :— (स्मितं कृत्वा) प्राणवल्लभ इति वद।

सरो :— सखि! त्वामात्मीयामिति मत्वा मनोगतं व्यक्तीकरोमि। सत्यं तेनापहृतं मे मनः।

भ्रम :— जीवितदानेन सर्वं तत्तथाविधमेव प्रतिभाति।

सरो :— न केवलं तावन्मात्रेण किन्तु रूपसौष्ठवेनाऽपि।

भ्रम :— तत्कथम् ?

सरो :— आत्मीये! असावनङ्ग एव रूपसंपदि।

भ्रम :— प्रियसखि! अभिमतं खलु वस्तु किञ्चित्करमपि लोको-त्तरमिव प्रतिभाति।

सरो :— न तथा समर्थये । इदमत्र सत्यमवेहि यतोह्यस्य—

नासायां भुजमूर्ध्नि भावनिवहे चोच्चैस्स्थितिर्मार्दवं
हस्तोष्ठांघ्रितले तथा मनसि फालोरःस्थले विस्तृता ।
दैर्घ्यं पीवरबाहुदण्डयुगले चालोचने लोचने
मुक्तासारविजृम्भणं स्मितकलाप्रादुर्भवे प्राभवे ॥

भ्रम :— तर्हि सरूपवयसोर्भवतोः सङ्गतिरुचितैव भवति ।

सरो :— सखि ! सात्वाशैव केवलम् ।

भ्रम :— नेयमाशा किन्तु सम्भाव्यार्थकथनमपि । यतस्त्वमपि सौन्दर्यराशिः ।

सरो :— आस्तां नाम तत्सर्वं । किन्तु तस्यार्थराशिमनुस्मृत्या-न्यथा शङ्कते मे मनः ।

भ्रम :— सखि ! नैवं मन्यस्व । कामिनः शुल्कराशिं नापेक्षन्ते । सौन्दर्यराशिं कान्तामभिमत्य सेवन्ते । पश्य —

विद्यां प्रज्ञां साहसं च प्रदर्श्य द्रव्यसञ्चयम् ।
कामिनो विद्रुतात्मानः श्रयन्ति सुविलासिनीः ॥

सरो :— भ्रमरिके ! शुल्कव्याधिस्तु सर्वत्र बद्धमूलस्तिष्ठति ।

भ्रम :— युवधीरास्तमपि निराकुर्वन्ति । धीरोह्ययं तव प्रेयान् ।

सरो :— सखि ! न जाने तस्य चित्तम् ।

भ्रम :— बन्धविमोचनसमये सखीमुद्दिश्य कीदृशस्तस्य मनो-विकारः?

सरो :— धीरस्वभावो ह्यसौ ।

भ्रम :— भावसूचकं किमपि चेष्टितं तस्यावगतं भवत्या ?

सरो :— निभृतमेतत्प्रकटीकृतं तेन धीरेण। तद्यथा—

विलासिनीदर्शनमात्रहेतुका
वयःस्थसाधारणचित्तविक्रिया।
न दर्शिता तेन गभीरचेतसा
स्तुता प्रसङ्गेन तु चारुता मम॥

भ्रम :— तत्कथम्?

सरो :— मदुपलब्धिप्रसङ्गे धात्र्या प्रस्तुते मदीयसौन्दर्यविशेषमभिनन्दितवान् कुमारः।

भ्रम :— तर्हि सर्वमनुकूलतया परिणंस्यति।

परि :— (आगत्य) स्वामिनि! काचन पत्रहस्ता दूती कुमार्या दर्शनमभिकाङ्क्षति।

सरो :— अवश्यं प्रवेशय।

परिचारिका :— तथेति गता।

दूती :— (प्रविश्य) नमः सौन्दर्यदेवतायै।

सरो :— उपविशतु। किंनामधेया भवती? किंवाऽऽगमनप्रयोजनम्?

दूती :— (उपविश्य) स्वामिनि! श्रीधराख्यस्य भूस्वामिनः परिचारिकाहमेलावती नाम। तदादेशेन भवत्याः सकाशमागता।

सरो :— सर्वविदितोऽयं भूस्वामी। एकदा तत्पत्न्या सह भुवनेश्वरीप्रासादे ममपरिचयभाग्यमपि सम्भूतम्। किंच तस्यां मम मातृभक्तिरपि सञ्जाता।

दूती :— तेन भूस्वामिना लेखोऽयं प्रेषितः। (इति लेखं ददाति)

सरो :— (लेखमुद्घाट्य निभृतं पठित्वा प्रकाशम्) पलावति ! सर्वस्वदानेन मां विवोढुमभिलषति तव स्वामी। सत्येकस्मिन् कलत्रेऽन्यां वोढुमनुचितं विज्ञानाम्।

दूती :— सुन्दरि ! तव सौन्दर्येण कलालालित्येन च मोहमुपगतोऽयं श्रीधरः। सर्वमप्युपपक्षीकर्तुमिच्छति। यदि सापत्न्यभावं न सहते कुमारी तदा प्रथमकलत्रमपि त्यक्तुमीहते मत्स्वामी। धनवतां किंवाऽसाध्यमस्ति ? पश्य—

वीणानादो मोहनो नैव नादो
नैवाह्लादी कामिनीकण्ठनादः।
सर्वोत्कर्षी रूप्यकस्यैव नादो
मुग्धो बालोऽप्यत्र यन्मोहमेति ॥

धन का महत्व।

सरो :— अहो ! प्रभूताह्यर्थसम्पत्सर्वानर्थकारिणी। लोके सुवृत्तमपि दुर्वृत्तं करोति। दुर्वृत्त्या जनो नीतिमपि त्यजति। पश्य —

नीतितन्तूंश्च मृदुलान् समबुद्धिप्रकल्पितान्।
दुर्वृत्तश्छेत्तुमुद्युङ्क्ते दुष्टाश्वः प्रग्रहानिव ॥

दूती :— यदि लोकापवादभीतिर्बाधते भवतीं तदा तामपि दारभावमात्रेण गृहे स्थापयिष्यति।

सरो :— हन्त ! सत्स्वपि शतशो धर्मशासनेषु स्वैरचारिणो जनास्तदतिलङ्घने नितरामुपायमन्विष्यन्ति। विशेषतस्तु प्रेमोन्मादे। तदिदमत्र सत्यमिव प्रतिभाति।

कर्मानुष्ठानदार्ढ्यंच भावसंशुद्धिरेव च
संस्कारेणैव चित्तस्य जायते नान्यतः क्वचित् ॥

किंच प्रवयसां सत्कर्मप्रवृत्तिरेव कनीयसामुपदेशिका भवति । पश्य —

वृद्धान् संस्कारतः शुद्धान् नीत्यानुष्ठितकर्मणः ।
कनीयांसोऽनुवर्तन्ते बीजराशीनिवाङ्कुराः ॥

दूती :— अयि! व्यवहारानभिज्ञे ! कण्टकविक्षेपः क्रियते स्वयमेव सौख्यमये जीविताध्वनि । यतोहि —

संपद्विशेषे धनदेन तुल्यो
महेन्द्र एवैहिकभोगराज्ये ।
सेवां चिकीर्षुस्तव चायमास्ते
निरस्यसि प्राज्यसुखैकराज्यम् ॥

सरो :— अयि ! दूत्यनिर्वहणशीले ! पश्यात्र भारतनारीधर्मम् ।

प्रागेकस्मिन्नभिमतगुणे यूनि चासज्य चित्तं
पश्चात्प्रेम्णाऽकलुषगतिना सम्यगाभुज्य भोगान् ।
तत्संपर्कात्परिमितमपत्यं समासाद्य कीर्त्या
वृद्धिं नीयात्स्वकुलमबला प्रेमसारैकमूर्तिः ॥

तद्गच्छतु भवती यतो मम हृदयं प्रागेवैकस्मिन्नभिमते यून्यासक्तं प्रेमरसेनापूरितं च । अन्यच्च —

विशुद्धप्रेमयुक्तानां स्त्रीणां हृदयतन्तुषु ।
कालुष्यभावसंसर्गो न स्थानं लभते क्वचित् ॥

दूती :— ( उत्थाय ) (सरोजिन्याः पादौ नमस्कृत्य) अयि ! अविचालितशीले !

दूतीधर्मादागताऽहं मां क्षमस्व दयामते !
साद्रूप्यमिव चानन्तं साद्गुण्यं त्वयि निष्ठितम् ॥

(इति निष्क्रामन्ती स्वगतम्)

अहो! चपलमतिः स्त्रीलोक इति जनाः कथयन्ति नैतद्युक्तम् तथाहि —

सम्यगालोच्य कुरुते कृत्वा च न निवर्तते ।
न जहाति स्थिरां वृत्तिं धीरो हि वनिताजनः ॥

अनुष्ठितं मया स्वामिकार्यं । वैफल्ये किं कुर्याम् ? आलोच्यमाने गुणवत्यां गृहिण्यां जीवन्त्यामेतादृशी प्रवृत्तिं र्नोचितैव स्वामिनः । परमार्थतोऽप्ययमेव सत्यः । तद्यथा—

हावभावचतुरा सुमध्यमा
साध्यते हि गुणतो न काञ्चनैः ।
पाणिसर्ग्यसुमदाम कोमलम्
यन्त्रसृज्यमिति कोऽभिमन्यते ॥

( इति निष्क्रान्ता ) ( नेपथ्य आभाषणम् )

आः कष्टम् ! परुषभावो हि दुर्भरो वरवर्गीयस्य जनस्य ।

सरो :— ( श्रुत्वा ) सखि ! ममैवोद्वाहोद्यमधुरया नितान्तश्रान्तमनाः पिता किमपि चिन्तयन्नित एवागच्छति । अतोऽन्यत्र गच्छावः । ( इति निष्क्रान्ते )

( ततः प्रविशन्ति मणिदासस्तत्पत्नी सुव्रता धात्री च )

मणिदासः :— आः कष्टम् ! परुषभावो हि दुर्भरो वरवर्गीयस्य जनस्य । यद्रूपलावण्यकलाविभूषितामपि कन्यां ग्राह-

यितुं याचमाने तत्पितरि शुल्कोच्चयाकाङ्क्षी तद्बन्धुजनस्तत्र वैमुख्यमभिनयति। उचितवरान्वेषिणो मे सञ्चारवशात् पङ्कोऽपि पांशुभावं गत इति नातिशयितवचनमिदम्। नैतावतापि कृतकृत्योऽस्मि सञ्जातः। पुत्रीजननवार्ता हि कुटुम्बिनामद्यकाले हृदयसीम्नि वज्रसम्पात इवाभासते। पुरा काले गृहीतृजनः सुवर्णभूषादिभिः कन्यां परितोष्य सादरमुद्वहति स्म। अधुना तादृश आचारः सर्वोऽपि विपर्यस्तो जातः। (भार्यां दृष्ट्वा) प्रिये! श्रीधरेण भूस्वामिना त्वद्यैव सन्दिष्टोऽस्मि। तद्यथा —

अहं वृणीयां भवतस्सुरूपां
सुतां नु सर्वस्वसमर्पणेन।
सेवे भवन्तौ पितरौ च तस्या
गुरुं यथा शिष्य इवाप्तविद्यः॥

एवं विनयसम्पन्नो धनाढ्यो जामाता भवितुमर्हति।

सुव्रता :— नाथ! तस्य पाणिगृहीती काचन वर्तत इति श्रूयते।

मणि :— भवतु। उभे अपि तस्य प्रिये भवेताम्। विशेषतश्चावयोः सुता।

सुव्रता :— सर्वं सुष्ठु संपद्यतां नाम। किन्तु न काऽपि मानवती सपत्नीभावं सहते। पश्यतु नाथः —

परैर्नितान्तं परिदूषिताऽपि
पत्याच रोषादवमानिताऽपि।
न दूयते मानवती तथा द्रा-
ग्यथा तु सापत्न्यविकारविद्धा॥

मणि :— किंवा धात्री मन्यते ?

धात्री :— कुमार्या आशयमविज्ञाय न किमपि निश्चेतव्यमिति मन्ये।

वनपाल :— (प्रविश्य) स्वामिन्! महात्मा देवव्रत आयाति।
(इत्युक्त्वा निर्गतः)
(ततः प्रविशति देवव्रतः। सर्वे उत्तिष्ठन्ति)

मणि :— विद्वन्नमस्ते!

देव :— शुभं ते भूयात्।

मणि :— आसनमलङ्करोतु महाभागः। (देवव्रतेन सह सर्वे उपविशन्ति)

मणि :— महात्मन्! भवतः शिष्य आढ्यपतिर्भाग्यवान् यत्पुत्रेण गुणवता पुत्रिणामग्रेसरः सञ्जातः।

देव :— तत्तथैव। किं तु पितापुत्रयोरद्य केनचित्कारणेन बुद्धिभेदः समजनि।

मणि :— नचेद्रहस्यमत्र तत् श्रावयतु भवान्।

देव :— किमन्यदस्ति! शुल्कलोभेन पितुः काचन कन्यकाऽभिमता पुत्रस्यत्वपरा।

मणि :— पुत्रस्तूदारमतिः स्वतन्त्रश्चेति मन्ये।

देव :— अत एव पितुर्मूर्खतया तदीयं धनं प्रभूतमपि परित्यज्यान्यत्र गतः।

मणि :— गुणखनेरायुष्मतः कष्टमापतितम्! कुत्र गतः स आयुष्मान्?

देव :— मातृवचनानुरोधेन तस्या मातृसम्बन्धिनं दायं स्वीकृत्य तोऽनतिदूरे सुजनपुरग्रामे कृषिकर्मणा जीवति।

मणि :— अहो! भावस्वतन्त्रस्य पदे पदे विपदः समापतन्ति। तथाहि—

सत्यार्थमेवाभिदधाति नित्यम्
कापट्यभावं सहते न किंचित्।
तेनास्य मित्राणि न सम्भवेयुः
स्वातन्त्र्यवादी लभते न सौख्यम्॥

किमुद्यमोऽद्यायमाढ्यपतिः?

देव :— साध्वी तस्य पत्नी दिवं गता। पुनरन्यां च विवोढुमुद्युङ्क्ते।

मणि :— प्राणिस्वभावोऽयं खलु! पश्यतु भवान्—

मृतेऽपि सम्बन्धिनि कालतः शुचं
विमुच्य जीवः स्वसुखेऽवतिष्ठते।
कुठारलूनो विटपेषु पादपः
समेधते पुष्पफलैर्हि शेषतः॥

देव :— तत्तथैव।

मणि :— अहो! सर्वत्राधिकारिणामहङ्कारिणां चित्तविकारा विलक्षणा दृश्यन्ते। तथाहि—

स्वमनसि चिन्तितमखिलं
तदमलमभिमत्य लोकमनुशास्ति।
जानाति नैव किञ्चित्
पीडां साधोरहंयुरधिकारी॥

(धात्रीं दृष्ट्वा) कुमारीमाह्वय! देवव्रतादाशिषमधिगच्छति।
( धात्री गत्वा सरोजिनीभ्रमरिकाभ्यां प्रविशति )

मणिदासः — पुत्रि ! नमस्कुरु महात्मानम्।

सरो :— वन्दे महाभाग !

देव :— आयुष्मति ! किंवान्यदाशासे ? पश्य —

प्रतिदिनमकलङ्कं चिन्वती पूर्णभावं
लसति तव मुखाब्जे तन्वि ! सौन्दर्यलक्ष्मीः।
अनुभवितुमनूनां तां सपद्येव भूया-
स्त्वदितरसुदतीनां दुर्लभो वल्लभस्ते ॥

( तदाज्ञया सर्वं उपविशन्ति )

मणि :— महाभाग ! अन्विष्यान्विष्यापि योग्यवरलाभे विफल-
यत्नोऽहम्। अधुना भवदाशीःप्रभाव एव शरणम्।

देव :— रूपसौशील्यादिविभूषितायाः सदृशवरलाभे प्रयत्नभर
उचित एव।

मणि :— महात्मन् ! न खलु निखिलैश्वर्यसम्पन्नाय वराय स्पृहते
मे मनः। किन्तु साधारणमेव कांक्षति। शृणोतु मम मनो-
गतम् —

भावाविष्करणे स्वतोऽपि मुकुलीभावं वधूनां विदन्
गृह्यार्थेष्वनुकूलतां कलयितुं चित्तं सदा हर्षयन्।
ह्रासो नैव भवेद्यथा खलु तथा वासोऽन्धसी साधयन्
जामाता बिभृयात्सुतां यदि तदा धन्यो भवेत्तत्पिता ॥

देव :— उचितैवेयमभ्यर्थना गृहस्थानाम्।

मणि :— (भार्यां दृष्ट्वा) किंवा मन्यते भवती ?

सुव्रता :— नाथ! किमन्यदस्ति? भवत इव ममापि सैवाभ्यर्थना किन्तु स्त्रीस्वभावो मामत्युच्चयाकांक्षिणीं करोति तद्यथा—

सुतां सुवर्णोपमरम्यरूपां
सुवर्णमुक्तामणिभूषिताङ्गीम् ।
भर्त्रा च मूर्ध्ना प्रतिनन्द्यमाना
मिच्छामि वात्सल्यगुणेन मातुः ॥

(सर्वे स्मितं कुर्वन्ति)

देव :— उचितैवेयमभ्यर्थना कन्यकामातुः। कुमार्यास्तु मनोगतं श्रोतुमिच्छामि। वरगुणपरिशीलने सैव प्रधानभूता हि। (सरोजिनी लज्जां नाटयति)

सुव्रता :— विद्वन्! लोकवृत्तान्तानभिज्ञा मम सुता।

देव :— सुव्रते! तत्तथैवास्तु। तथाऽपि कन्यकानामनारूढ यौवनानामपि वरगुणाभिलाषोऽङ्कुरितत्वरूपेण वर्तते किमुत युवकन्यकानां। किञ्च तासां मनोऽभिलषितमविज्ञाय वरनिर्णयोऽप्यनुचित एव भवति। पश्यन्तु सर्वे—

बालां वल्लीं समुत्खाय युज्यतेऽन्यत्र रोपितुम्।
सहस्रैरपि यत्नानां पुष्पितां नैव युज्यते॥

सुव्रता :— आयुष्मति! महात्मा देवव्रतः पृच्छति हृद्गतमसंशयं निवेदय।

मणि :— सुते! वयमत्र सर्वे तवाभ्युदयकांक्षिणः। वद मनोगतम्

भ्रमरिका :— सखि! उदासीनता पश्चात्तापाय भवेत्।

सरो :— महात्मन्! किंवान्यदस्ति वक्तव्यमत्र? मदुपाध्याय मुखादेकदा श्रवणगोचरीभूतोऽयं श्लोकः। स यथा —

कांक्षन्ती विभवानुसारवशतो भूषादिवेशस्थितिं
वैयात्ये क्षमया प्रियस्य परुषीभावं समीकुर्वती।
सौख्यं कण्टकिगुल्मपल्लवचयं छागी यथा गृह्णती
पत्नी संसृतिकानने सहचरेत् पत्या यशोलालसा॥

देव :— साधु! बाले! साधु! आकारानुरूपो भावसमुदयः कुमार्याः (मणिदासमुद्दिश्य) आयुष्मन्! मणिदास! यद्यथा रोचते कुमार्यै तत्तथैव निर्वर्तय। यतोहि —

निर्बन्धसम्बद्धवधूवराणां
गुणेषु रूपादिषु लालसानाम्।
आदौ समासादितवैमनस्य
मादेहपातं मनसो हि शल्यम्॥

मम तु वेलातिक्रमो भवति। साधयामि तावत्।

( सर्वे उत्तिष्ठन्ति )

मणि :— ( जनान्तिकम् ) धात्रि! श्रीधरवृत्तान्तं कुमार्यै निवेदय। वयमपि गच्छामः। (धात्रीसरोजिनीभ्रमरिकावर्जं मन्ये निष्क्रान्ताः)

धात्री :— उपविशतां भवत्यौ। वक्तव्यविशेषोऽस्ति ( सर्वा उपविशन्ति ),

धात्री :— सरोजिनि! पितुरभिमतोऽयं कश्चन वैवाहिको विषयः प्रतिपाद्यते। शृणोतु भवती।

सरो :— रहःस्थिताभ्यामावाभ्यां सर्वमपि श्रुतम्। नह्येताद्दृ
जने मनो लगति।

धात्री :— तर्हि कथमनुरूपो वरो लभ्येत ?

सरो :— सत्यमत्र कथ्यते। प्राणदो गुणचन्द्रो मम वल्लभः।

धात्रि :— आयुष्मति! युज्यते तत् किन्तु सोऽधुना निस्स्वः
सञ्जातः।

सरो :— तदपि श्रवणगोचरीभूतम्।

दूती :— स कथमत्र त्वद्विलाससंभारसंभरणक्षमो भवेत् ?

सरो :— तत्सर्वमपि बाह्यिरम्। आन्तरस्तु प्रेमभर एव पश्य —

पुंसामुल्लसतां वधूजनसमावेशे हठात्संभवे
दौद्धत्यं श्रयते ह्यसौ समरसीभावाय हावादिकम्।
सौहार्दे जनिते परस्परपरीतोषाय भूषादिकं
नानन्दामृतपानतृप्तहृदयैः साडम्बरं कांक्ष्यते॥

धात्री :— यद्यन्यमनाश्चेत्कुमारस्तदा हताशा भवेः।

सरो :— तदर्थमहमेव यतिष्ये। यदि विफला स्यामत्र तदाऽनन्तर
करणीयं तावन्निर्णेष्यामि। त्वं गच्छ (सा गता)

सरो :— (भ्रमरिकां दृष्ट्वा) सखि! आयासकारिणी भविष्यामि
तव।

भ्रम :— सख्याः स्वास्थ्यसम्पादने प्रयासं न गणयन्ति स्त्रियः।

सरो :— तर्हीमां मम प्रार्थनां पत्त्रनिक्षिप्तां करोमि। (लेखं
विलिख्य) सखि! लेखममुं गुणचन्द्राय समर्पय।

भ्रम :— लेखार्थः कीदृशः ? यदि श्रोतव्यस्तं श्रावय।

सरो :— सख्या अनुमतिमन्तरा लेखार्थः कथं क्षेमङ्करो भवेत् ? शृणु तावत् ।

दाता प्राणानिलस्य प्रभुगुणसुरभिः कन्यकानां वरार्ह
श्चित्ते माधुर्यधुर्यस्त्वमिति मम मनः सञ्जितं त्वय्यतीव
कारुण्यं चेत्तवास्यां सहवसतिमुदं देहि तुल्यप्रपत्त्या
प्रीतिश्चेदत्र नस्यात्प्रियगुण! कुरु मां किङ्करीं त्वत्सकाशे

भ्रम :— अहो ! सख्याः कल्पनाचतुरता ! अवश्यं तस्य हृदय मावर्जयेत् ।

सरो :— प्रयतिष्यावहे। परन्तु दैवेनाप्यनुकूलेन भाव्यम् ।

भ्रम :— अवश्यं फलिष्यति प्रयोगविशेषः। आयान्तीं श्रियं कोवा जानुदेशेन निरुन्ध्यात् ?

सरो :— सखि ! मम चित्तवृत्तिरविचाल्या दृश्यते। पश्य—

पङ्कोत्थिता सा मुख एव रक्ता
कथं नु चन्द्रं स्वपतिं लभेत ?
सरोजिनी नूनमनूनरागा
कलावतीयं गुणचन्द्रमीयात् ॥

( पत्रं गृहीत्वा भ्रमरिका गता )

सरो :— ( आत्मगतम् ) यद्यत्र विफलास्यामहं तदा ह्यसम्भव एव प्राणानिलसञ्चारो मम। भवतु। का वा चिन्ता भाविनीं गतिमुद्दिश्य । ( निष्क्रान्ता )

इति महीधरोपाह्वयेन वेङ्कटरामशास्त्रिणा
विरचिते सरोजिनीसौरभे नाटके
चतुर्थोऽङ्कः ।

# श्रीसरोजिनीसौरभे

## पञ्चमोऽङ्कः

—□—

( ततः प्रविशति क्षेत्रपालस्तत्पत्नी च )

क्षेत्र :— अये! पाटलिके ! पुरुषस्य भाग्यमिति लोकोक्तिरवितथा यदेतस्य स्वामिनो गुणचन्द्रस्य पादनिक्षेपणमात्रेण समुपचितपुष्पफलसंभारेयमारामभूमिरपूर्वेव भासते ।

पाटलिका :— अयि ! आम्रातक ! सस्यसंपद्विशेषे न केवलं पुरुषस्य भाग्यं कारणम् किंतु प्रयत्नभारोऽपि नितरामपेक्ष्यते ।

आम्रातक :— नात्र सन्देहलवः अत एव कृषितो नास्ति दुर्भिक्षमित्यार्यैः कण्ठरवेणोक्तम् ।

पाटलिका :—आम्रातक ! यद्येवं देशे सर्वत्र कृषिकर्मण्यनलसता स्याज्जनस्य तर्हि फलपुष्पादीनां क्षीरसमृद्धेश्च न कुत्रापि ह्रासः संभवेत् । पश्य —

भानोरपि चन्द्रमसः
किरणान्वायुञ्च वृष्टिसौभाग्यम् ।
उपयुङ्क्ते यत्र जनः
क्षुद्बाधा नैव तत्र सम्भवति ॥

आम्रा :— सत्यमुक्तं भवत्या। सर्वोपयोगितयैवैतानि दैवेन प्रसादितानि। (स्मृतिमभिनीय) पाटलिके! स्वामी गुणचन्द्रः प्रातरद्य कुत्र वा गतः स्यात्?

पाट :— काचन दूती पत्रमेकं स्वामिने दत्वा प्रतिनिवृत्ता। तं लेखार्थमधिकृत्य स्वामी गतः स्यात्।

आम्रा :— लेखार्थः क इति सम्भावयसि?

पाट :— तयोः सम्भाषणादिना ज्ञायते वैवाहिकोऽत्र विषय इति

आम्रा :— शुभं भूयात्। शीघ्रमेव स्वामिनी च समागमिष्यति इति प्रमोदलाभोऽस्माकम्। (नेपथ्याभिमुखमवलोक्य) पाटलिके! पश्य। क्षेत्रभागेषु कर्मकराणां क्रियासञ्चारक्रमम् एते स्वामिनोऽसन्निधानात् क्षेत्रकर्म मन्दं मन्दमाचरन्ति।

पाट :— नन्वयं स्वभावः कर्मकराणां। यथाहि —

यद्युग्रदण्डोऽप्यधिभूर्दवीयान्
न सेवको जागरिता स्वकार्ये।
तथाऽप्रमत्तो न हि चातपे स्या
द्यथा तु वह्नेः सविधे हिमार्तः॥

आगच्छ त्वरयितुमेतान् स्वकर्मणि। (इति निष्क्रान्तौ)

(इति प्रवेशकः)

सरो :— (प्रविश्य) कथं चिरयति मे प्रियसखी! पत्रसमर्पणस्यावकाशो, न लभ्येत! आहोस्वित् प्रार्थनां निराकुर्वता तेन सह हेतुवादप्रसंगेन कालो वा नीयेत! (श्रुतिमभि-

नीय ) चरणसंचार इव प्रतिभाति ( पुरोऽवलोक्य ) आः! समागच्छति प्रियसखी ! अस्या मुखप्रसादः सूचयति सर्वोऽपि यत्नः सफल इति । तथाहि—

अनुक्तवाचोऽपि मुखप्रसादः
संधातुरर्थस्य मुदावहः स्यात् ।
यथा प्रदोषे तमसा विमूढ-
लोकस्य कान्तिः समुदेष्यदिन्दोः ॥

(ततः प्रविशति भ्रमरिका तामनुसृत्य पुष्पफलभाजनहस्तः पुरुषश्च)

सरो :— स्वागतं सख्याः (उभे अप्युपविशतः) कोऽयमभिनव-पुष्पफलसंभारः ?

भ्रम :— उपदीकृतस्तव प्राणवल्लभेन ।

सरो :— ( स्मितं कृत्वा ) सखि ! अलम् परिहासेन ।

भ्रम :— किं भ्रमरिकां मिथ्यावादिनीं गणयति सरोजिनी ?

सरो :—(पुष्पाणि फलानिचादरेण गृहीत्वा ) सखि ! अपूर्वः खल्वेष पुष्पफलसमुदयः !

भ्रम :— तव वल्लभस्य कृषिकर्मविलसितमिदम् ।

सरो :— किमनुगृहीता मत्प्रार्थना ?

भ्रमः— सर्वं कथयिष्यामि । प्रथममेनं सत्कृत्य प्रेषय ।

(सरोजिनी किञ्चिद्ददाति । गृहीत्वा परिचारको गतः)
(भ्रमरिका लेखमेकं ददाति । सरोजिनी तमुद्घाट्य पठति।

यदर्थं सहते ग्रीष्मसंतापं तरुरुत्कटम् ।
कादम्बिनी वृष्टिपातात्सैव संजीवयत्यमुम् ॥

भ्रम :— सखि ! औपम्येन ज्ञायते त्वय्यस्य प्रेमातिशयः समुत्कटः संतापभरश्च दुर्भर इति। किंच त्वया समुपलप्स्यते पतिवाल्लभ्यमनितरसाधारणमिति। उचितं खल्वेतत्तव सौन्दर्यनिधेः।

सरो :— ननु भ्रमरिकासंगेन सरोजिन्या हृदयविकासः सरसो मधुरतरश्च परिणमति ?

भ्रम :— सखि ! आयुष्मतः पितृसंवादस्त्वदर्थ एवेत्यनेन निश्चीयते

सरो :— अविसंवादी खलु सख्यास्तर्कः। सखि ! आदरविशेषः कीदृशस्तस्य भवत्याम् ?

भ्रम :— सर्वत्र तुल्यादरः कुमारः। त्वत्संबन्धवशाद्विशेषतो मयि।

सरो :— भ्रमरिके ! एतदपूर्वपुष्पफलसंदर्शनेन तदारामोऽतीव सुन्दर इति तर्कयामि।

भ्रम :— शृणोतु कुमारी तदारामरामणीयकम् ।

रोदोगह्वरतुल्यकूपसलिलैर्यन्त्रोत्थितैर्वर्धितै
र्नारीकेरमहीरुहैः फलभरादाभुग्नमस्ताश्रितैः ।
व्यामग्राह्यशलाटुहेमपनसैश्चित्रै रसालद्रुमै-
राराामो मधुकेतकीपनसरम्भाद्यैश्च रम्यो महान् ॥

सरो :— अयि ! सकलफलानोकहनिवहैस्तदारामो जीवनाराम इति मन्ये।

भ्रम :— न केवलं तथाविधः किन्तु चक्षुरारामोऽपि तद्यथा —

कुण्डोध्नोमहितैः शतैरपि गवां व्याप्तं महच्छाद्वलं
तस्यान्ते सुमशोभियावनजपाकुन्दक्षुपाणां वृतिः।
शम्बीधान्यविशेषशोभिततला नेदिष्ठसीमा तत
श्चेतः शक्रवनीयति स्म नितरां तस्मिंश्च कैदारिके॥

सरो :— साधु ! सखि ! साधु ! श्रवणमात्रेणैव निरतिशय-
मानन्दमनुभावयति तदारामसन्निवेशः। उपायं ताव
चिन्तय तेन सहाचिरसमावेशस्य।

भ्रम :— अयि ! लोकवृत्तान्तानभिज्ञे ! नास्त्यत्रोपायान्तरापेक्षा
स युवा नूनमविलम्बितमेवात्रागमिष्यति। पश्य —

नोपेक्षते व्यञ्जितहार्दभावां
मनोरमां कोऽपि युवाधिगन्तुम्।
रसाञ्चितां दर्शितमध्यभागां
मामोदिनीं पद्मलतामिवालिः॥

सरो :— सखि ! निर्वृतं मे हृदयमिष्टसिद्ध्या। अद्य सर्वमपीद
मलयानिलादिकं चिरानुभूतमप्यपूर्वमिवाभाति पश्य—

आत्मानमानन्दविसारिणं मनो
यद्यभ्रखण्डं मलिनं विधुं यथा।
रुन्ध्यात्तदा भाति जगद्विकारभाक्
ध्वस्तेऽवरोधे दधतेऽतिरम्यताम्॥

प्रकृती मि॰ ३०

गुण :— ( प्रविश्य ) ( आत्मगतम् ) आः सेयं सरोजिनी
समुच्छ्वसितमिव मे मनः प्रतिभात्यस्या दर्शनेन यतो हि
लोके—

उत्सूते महतीं मुदं नयनयोः सद्यःसमालोकने
द्रागार्द्रीयति हावभावविभवैश्चित्तं समावेशने।
भीरुं शूरयते क्रियासमुदये व्यङ्ग्यार्थसम्भाषणे
पुंसःकामितकामिनी हि नितरां रासायनी संस्क्रिया॥

आननशोभाप्यस्या अनितरसाधारणीं स्थितिमुद्वहति। तद्यथा —

अस्याः पश्याम्यहमतितरामाननं सद्वितीयम्
लीलापाङ्गः स्मरविलसितश्चन्द्रबिम्बे यदि स्यात्।
एवं जाने ह्युपमितकलामाननस्यापि कान्ति
सौरभ्यं चेदुचितविभवं लभ्यते चन्द्रिकायाम्॥

सरो :— भ्रमरिके! गायामि तावदानन्दगीतमिदम्।
( वीणामादाय गायति )

याहि याहि मम मा विश गेहं
का परिचिन्तय कितव! तवाहम्।

गुण :— किमपि श्रवणसुभगं गायति। गुल्मान्तरितस्तावच्छृणोमि

सरो :— पुनस्तदेव गायति।

गुण :— कुतोऽयमकाण्डप्रतिषेधः?

सरो :— अधरितसुधमधु पपिथ कया त्वम्
गतनिशि गतवानितरवशत्वम्।

गुण :— अनुचितोऽयं वितर्कः।

सरो :— नहि नहि शङ्का सखि! मयि भाव्या
त्वदितरतरुणी नहि मम सेव्या।

गुण :— ( मुखप्रसादं नाटयति )

सरो :— मधुमद्वशगे मयि जलजातं
प्रेयसि कारागृहमयि ! जातम् ।

गुण :— अवगतोऽयं गीतार्थः । सर्वथेयं भ्रमरगीतिः । न केवलं रूपलावण्यमेव किंतु गानकलालालित्यमपि प्रशंसनीयमस्याः (सत्वरं प्रविश्य)

कलितभुवनमोहं चक्षुषी विक्षिपन्त्या
विजितपिकनिनादं कण्ठनादं वहन्त्याः ।
तव मुखजलजातात्तन्वि ! लब्धावतारं
परवचनगतं वा नैव सेहे निरोधम् ॥

सरोजिनी :— (सहसोत्थाय) स्वागतं प्राणेश्वरस्य । आसनमलंक्रियताम् (आसनं सज्जीकर्तुमिच्छति)

गुण :— प्रिये ! नैव सेहे करपद्मस्य ग्लानिं सरोजिन्याः । अहमेव निर्वर्तय इदं कर्म (इति वारयन्) पश्य प्रेयसि !—

कर्म कर्तुमलमीदृशं न ते
पाणिरस्ति जन एष तत्कृते ।
लेशतोऽपि सहते फलं यथा
नैव पुष्पमुपभोगपीडनम् ॥

( स्वयमेवसज्जीकृत्यासनमुपविशति । सरोजिनीभ्रमरिके चोपविशतः )

सरो :— प्राग्भवीयः पुण्यविशेष एव मामनुग्रहपात्रं करोति महात्मनः ।

गुण :— मानिनि ! नैवं मन्यस्व । पश्यात्र लोकस्थितिम् ।

मयि भवति यथा तवैष भाव
स्त्वयि च तथेत्यवगच्छ मे नितान्तम् ।
अभिलषितसमागमं हि यावत्
स्वगुणगणेऽप्यवमानिता जनस्य ॥

सरो :— ( त्रपया अधोमुखी तिष्ठति )

भ्रम :— महाभाग ! त्वद्गतः सख्याः प्रेमभरोऽयमनितरसाधारणः तद्यथा —

दूरं निरस्य बलवत्प्रतिबन्धमस्याः
प्रेमाङ्कुरस्त्वयि विनिद्रितवेग आस्ते ।
बीजाङ्कुरो हि रभसोद्गमबद्धदीक्षो
ग्रावागमप्यविगणय्य बहिः प्रयाति ॥

अतोऽत्र भवतोः समागमः शुभंयुरानन्दकरश्च भूयात् ।

गुण :— सखीवचनात्तत्तथैव परिणमेत् । ( सरोजिनीं दृष्ट्वा ) अयि ! चिन्तय मद्वचनमिदम् ।

लिप्सन्ते मणिहेममौक्तिकपरिष्कारान्प्रकृत्या स्त्रियो
लीलासुन्दरयोषितस्त्वतितरां तानाद्रियन्ते बहून् ।
अन्यूनातिरिक्तमर्थविभवं स्मृत्वा मदीयं परं
मुग्धे ! मां वृणुयाश्चिरं हृदि यथा तापो न पश्चाद्भवेत् ॥

सुभगे ! प्रेम पश्यति गुणानगुणेपीति न्यायात्प्रेमभराक्रान्त मनसामभिलषितो जनो निकृष्टगुणोऽपि समुदितगुण इव प्रतिभाति । किञ्च लोके कतिचन कन्यकाः प्रथमं रभस प्रवृत्तप्रसराः पश्चादुद्विग्नचित्ताः क्लिश्यन्ते प्रेमजगति ।

सरो :— नाथ ! यदुक्तं त्वया तत्सर्वं चञ्चलचित्तस्य कन्यका-जनस्य सम्भवेन्नाम। मम तु निश्चितमित्थमवेहि।

चित्तं त्वां महिमाभिभूषितमयस्कान्तं यथा संश्रितं
प्रीतिः सङ्गमवाप रूपविभवे क्षीरे यथा शर्करा।
अद्वैतस्थितिरिष्यते त्वयि परेशाने यथा योगिना
योगभ्रंशमुपैमि मामनुचरीं यद्यन्यथा मन्यसे ॥

( इत्यश्रूणि मुञ्चन्ती स्थिता ) ( गुणचन्द्र आसनादुत्थाय) सत्यवचनमेतन्नतु प्रतारवचनम्। अवगतस्तव प्रेमभरः प्रिये ! —

गृह्णामि रागात्तव पाणिमेष
ग्रन्थिर्भवेत्प्रेमलताद्वयस्य।
संसारसिन्धोःसुखदुःखसेतु
र्लोकस्य सेवाकरणैकहेतुः ॥

( इति तस्याः पाणिं गृह्णाति। नेपथ्ये कोकिलध्वनिः )

भ्रम :— अयि भोरभिनवदम्पती !

आम्रशाखिनवपल्लववन्दी
कामदेवगुणवैभववन्दी।
कोकिलोऽयमभिनन्दति योगं
गाढमामनति वामनुरागम् ॥

( सरोजिनीगुणचन्द्रौ हसितवदनौ स्तः )

गुण :— सरोजिनीसन्निधौ भ्रमरिकायाः स्वाभाविकी खलु मधुरगीतिः।

( नेपथ्ये ) सुव्रते ! श्रुत्वेमं प्रार्थितवरलाभं कुमार्या नितरा मानन्दति मे मनः। एहि तावदभिनन्दितुमेतौ।

सरो :— (आकर्ण्य) नाथ ! श्रुत्वा वृत्तान्तमिममानन्दितान्तरङ्गौ पितरावावां द्रष्टुमित एवागच्छन्तौ स्तः।

गुण :— तर्हि समुदयः शुभसन्ततेः।

( मणिदासः सुव्रता धात्री च प्रविशन्ति )

गुण :— वन्दे महाभाग !

सरो :— पितरावभिवन्दे। ( लज्जयाऽधोमुखी तिष्ठति )

मणि :— आयुष्मन् गुणचन्द्र !

पुण्येन प्राग्भवीयेन मत्सुता त्वां पतिं गता।
ईप्सितार्थेन वर्तेथामाचन्द्रार्कं शुभान्वितौ॥

गुण :— महतामाशीः शिरसा धार्यते।

मणि :— पुत्रि !

प्रलोभ्यमानाऽपि धनैर्बुद्धिभेदं न गच्छसि।
काङ्क्षितं कान्तमाप्नोषि कन्यकानां त्वमग्रणीः॥

सुव्रता :— जात ! गुणचन्द्र ! किमन्यदस्ति वक्तव्यम् ?

अनुपमगुणशीला मत्सुता भावतन्त्रा
त्वयि शुभगुणराशावात्मना लग्नचित्ता।
समुचितपरिचर्याप्रेमसारोपपत्त्या
नयतमुभयतृप्त्यै कालमाचन्द्रतारम्॥

गुण :— पतिव्रतानामाशीरनुपहतप्रसरा हि।

धात्री :— जाते ! सरोजिनि !

यन्तु कामयसे चित्ते दिष्ट्या तं पतिमाश्रिता ।
प्रार्थितप्रियसम्प्राप्त्येन कन्यानां वरः परः ॥

मणि :— आयुष्मन् ! गुणचन्द्र ! यथेयमस्मान्नसंस्मरेत्तथा परिपालयैनाम् ।

गुण :— महाभाग ! भवतां समक्षं गुणचन्द्रः सविनयमित्थं प्रतिजानीते ।

धर्ममर्थं च कामं च पुमर्थांस्त्रीनिमान्भजे ।
भवत्सुतासाक्षिकं च मनस्साक्षिकमेवच ॥

मणि :— आयुष्मति ! यथाऽसौ न कदाऽपि वैमनस्यं प्राप्नुयात् तथा प्रयतस्व ।

सरो.:— भो तात ! अयि च मातः ! शृणुतं माम् ।

वर्तिष्ये प्रेयसा सार्थं सुखदुःखसमस्थितिः ।
मनोवाक्कर्मभिः शुद्धा प्रयतिष्येऽस्य शर्मणे ॥

मणि :— जातौ ! विधिपूर्वकमुद्वाहमहोत्सवमात्मीयैस्साकमनुभवितुं गृहानेव गच्छामः । ( इति सर्वे निष्क्रान्ताः )

इति महीधरोपाध्यायेन वेङ्कटरामशास्त्रिणा
विरचिते सरोजिनीसौरभे नाटके

पञ्चमोऽङ्कः

# श्रीसरोजिनीसौरभे

## षष्ठोऽङ्कः

—□—

श्रीधरः — ( प्रविश्य ) आः श्रीमतामसाध्यं किं वा स्याज्जगति तथाहि —

विद्वांसः प्रणताश्चरन्ति नितरां प्रह्वीभवन्त्युद्धता
मैत्रीमर्थयते महानपि पुमान् धर्मासने संस्थितः।
कुर्वन्ति प्रमदाः सलीलमधुरैर्भुग्नाक्षिकोणैः स्पृहां
सत्येवं धनिनः पुरस्तु क इव प्रत्यर्थितामीहते ॥

( शिरः सञ्चाल्य ) सर्वस्वदानेन प्रार्थयन्तमपि मां निराकुर्वती सा ज्ञास्यत्यचिरमेव स्वकर्मणः फलम्। कथम् चिरयति मे सखा दुस्तन्त्रः। ( पुरोऽवलोक्य ) आगच्छन्निवास्ते।

दुस्तन्त्रः — ( प्रविश्य ) मित्र ! कुतस्त्वं विकलचित्त इव दृश्यसे?

श्रीधरः :— सखे ! किं वच्मि ? गुणचन्द्रो नामाढ्यपुत्रो मह्यमतीव द्रुह्यतिस्म।

दुस्त :— स पित्रा विसृष्टः सुजनपुरग्रामे निवसतीति

श्रीधरः :— सतु मया कामितां कन्यकां परिणीतवान्।



दुस्त :— आः कथमेतत्सम्भवति ? श्रीमान् खलु भवान्।

श्रीधर :— मित्र ! चिन्तय तावत्तमभियोगं येन स दुरात्मा क्षिप्र मेव कारावासमनुभविष्यति ।

दुस्त :— न तत्र तन्त्रान्तरपर्यालोचनापेक्षा यदयं ग्रामस्त्वदधिकारभूमिः ।

श्रीधर :— उपायमावेदय ।

दुस्तः— सस्यसम्पदनेनापहारितेति धर्मासने महानभियोगः कल्पयितव्यः ।

श्रीधर :— किं वा तेन साध्यते ?

दुस्त :— राजश्यालं प्रभूतवित्तसमर्पणेन प्रलोभ्य तेन सर्वं साधयिष्यते । पश्य —

नीतिमानपि न शौर्यवानसौ
दृश्यते हि नितरां नृनायकः ।
राष्ट्रियस्तु खलु रक्षणाधिपः
क्रौर्यवांश्च धनसाध्यवीर्यवान् ॥

तेन सर्वमपि सुसाधं भविष्यति ।

श्रीधर :— साऽपि यथा पतिदूरा दुःखमनुभविष्यति तथा प्रयतितव्यम् । किञ्च स बलवान् साहसिकश्चेति श्रूयते । तस्मादुपायेन प्रवर्तितव्यम् ।

दुस्त :— तदर्थं निभृतं यतिष्ये । ( श्रीधरस्य कर्णे किञ्चिज्जल्पति )

श्रीधर :— तत्साधनायावश्यकं वित्तमुपकल्पयामि । इति द्रव्यपेटिकां ददाति )

दुस्त :— ( गृहीत्वा ) सिद्धार्थो भव । ( इति निष्क्रान्तः )

श्रीधर :— यद्यदाशास्ति पुरुषो यं यं द्वेष्टि विशेषतः।
या साधयति तत्सर्वं नमस्तस्यै तु सम्पदे॥

(इति निष्क्रान्तः) (इति विष्कम्भः)

(नेपथ्ये) पाटलिके! कुत्राऽस्ते स्वामी गुणचन्द्रः?

(पुनर्नैपथ्ये) एष स्वामी स्वामिन्या सरोजिन्या सह केदारोद्याने वसन्तवैभवं पश्यन् विहरति।

(सरोजिनीगुणचन्द्रौ प्रविशतः)

सरो :— नाथ! पश्य! सुप्रभातसौभाग्यम्।

विहङ्गमानन्दितदिव्यसङ्गो
दिगङ्गनादर्शितदीप्तिहासः।
लतोपहारीकृतपुष्पगन्धः
सरोजिनीबन्धुरुदेति भास्वान्॥

गुण :— प्रेयसि! पश्चिमतः पश्य।

उषस्समुद्भूतसितप्रभेषु
प्रत्यग्दिगन्तेषु विकस्वरोऽपि।
न भाति शोभाविकलः सुधांशुः
वृद्धाशिरोजेष्विव कुन्दगुच्छः॥

सरो :— (विहस्य) चमत्कृतमौपम्यं नाथेन। प्राणेश्वर! प्राणिमात्रस्यानन्ददायकोऽयं कालः। यथाहि —

हिमचयपरिपीडादुष्टकालो विनष्टः।
सुरभिकुसुमसौम्यो दर्शितात्मा वसन्तः।
कुमतिनृपतिराज्ये लुप्तधर्मे विलुप्ते
सुखमय इव सर्वस्यापि सौराज्यभोगः॥

गुण :— प्रिये ! कुसुमविशेषलालसानान्तु विलासिनीनां प्रियतरो ह्यसावृतुराजो यतः कुसुमराशिमयाचित एवार्पयति।

सरो :— नाथ ! प्रकृतिसुन्दरः कं वा जनं न प्रीणयति ?

गुण :— सखि ! न केवलमयं पुष्पसौरभेण जनानानन्दयति। किन्तु मलयानिलादिना सर्वानविशेषतश्चाराधयति । पश्य

कुटीषु तार्णेषु कटेषु सुप्तान्
श्रान्तान्दिवा च श्रमजीविदीनान् ।
हर्म्येषु पर्यङ्कतलेष्विवाढ्या
न्निशासु संलालयतीड्यवातैः ॥

राज्ञः समुचितोऽयं धर्मो यत्सर्वप्राणिप्रीणनक्रियाभिरतिः।

सरो :— प्राणेश्वर ! सर्वत्रैतस्मिन् समये वयोविशेषं प्राभवविशेषं चापहाय सर्वैर्वसन्तोत्सवोऽनुभूयते । पश्य —

वसन्तकालोत्सवसम्भ्रमेण
स्त्रियः पुमांसश्च समानकृष्टाः ।

गुण :— प्रेयसि ! विशेषमत्र शृणु ।

नैतद्विचित्रं ननु चित्रमेतत्
पश्चात्पुमांसः पुरतस्तु तन्व्यः ॥

सरो :— ( स्मितमुखी भूत्वा ) काल्पनिकोऽत्र नाथः।

गुण :— नह्यत्र कल्पना । ऋतुधर्मोऽयं । योहि तदनुधावनं तेषाम् ।

सरो : ( स्मितं कृत्वा ) नाथ ! ताः पुष्पलताः पश्य ।

गुणः— (तथा दृष्ट्वा ) प्रिये ! सुभगतरोऽयमुद्देशः । यतोहि

पुष्पगुच्छकविनम्रमस्तका
मन्दमारुतविकम्पिता लताः।
अङ्गभङ्गिमविलासभासुरा
मोहनाङ्ग्य इव लान्ति मानसम् ॥

सरो :— नाथ ! औपम्ये बहुत्वं न सहते मे मनः।

गुण :— प्रिये ! उपमेयबहुत्वं मां तथा कारयति । क्षमस्व माम् ।

सरो :— नाथ ! पश्याग्रतश्चित्रमिदम् ।

रुवन् वनान्ते समुपेत्य वल्लीं
फुल्लां द्विरेफो भजते हि मौनम् ।

गुण :— प्रिये ! सत्यमिदमवेहि ।

किं चित्रमत्रास्ति ? भवेन्नकोवा
लीलावतीनां सविधे विधेयः ॥

सरो :— सर्वदा प्रियवादी खलु भवान् ! (किञ्चिदन्तरं गत्वा) प्रियं नः प्रियमिदम् ।

लग्नद्विरेफं सुमगुच्छयुग्मं
धत्ते लतेयं मधुमासहासम् ।

गुण :— सखि ! शृणु तावन्माम् ।

उरोजयुग्मं युवतिर्यथावा
कन्दर्पदर्पस्य विशिष्टचिह्नम् ॥

सरो :— (गुणचन्द्रमपाङ्गेन पश्यन्ती) न केवलं सौन्दर्याभिमानी भवान् किन्तु कविताभिमानी च। (दूरे चक्षुः प्रसार्य) चित्रतरोऽयं सन्निवेशः।

नाथ! पश्य तरुमेनमुन्नतं
वीरुधा नमितशस्तमस्तकम्।

गुण :— (तथा दृष्ट्वा) प्रिये! समुचित एवायं व्यतिकरस्तयोः यतोहि —

प्रेयसीभुजलतानियन्त्रितः
को युवा भुवि न नम्रतामियात्॥

सरो :— (हसित्वा) अत एव प्रियतमो भवान्।

गुण :— प्रिये! मामपि बाधतेऽत्र तम इति वर्णद्वयम्।

सरो :— अन्यनिरासायैव प्रयुक्तमिदम्। अन्यथासंभावनेन व्यथयितुं मामसांप्रतं नाथस्य। (इति मुखं व्यावृत्य तिष्ठति)

गुण :— (तस्या हस्तं गृहीत्वा) मनोनायिके! गुणचन्द्रो जानात्येव सरोजिन्याश्चित्तमकलङ्कम्।

सरो :— नाथ! अवलम्बस्व मां। यावदग्रपादयोः स्थित्वा मन्दारपुष्पमेतदवचिनोमि।

गुण :— (तथा करोति। सरोजिनी पुष्पापचयं नाटयति) प्रेयसि! गुणचन्द्र एव सरोजिनीं विचित्रतया पुष्पितां कर्तुमिच्छति। (इति तस्या हस्तात्पुष्पं गृहीत्वा केशपाशमलंकृत्य निर्वर्ण्य च) अहो! आश्रयविशेषमधिगम्य सुभगतराणि खलु भवन्ति भूषणानि!

तरुणि! कुटिलनीले केशपाशे त्वदीये
लसति रुचिरपत्रं श्वेतमन्दारमेतत्।
प्रसभहृतमनूनैस्त्वद्विलासैरुदग्रं
विमलमिव मदीयं मूर्तिमत्प्रेम लग्नम्॥

सरो :— प्रियतमेन समादृतमिति विशेषतश्च श्लाघनीयं भवति। ( उपरि दृष्ट्वा ) प्रियगुण ! पश्य। वृक्षाग्रतोऽसन्निधान-दोषेण कथमप्यनुपयुज्यमानतया व्यथितमिव स्थितं पुष्प-तल्लजम्।

गुण :— (उपरि दृष्ट्वा) प्रिये! समाश्वासयाम्येनं पुष्पराजम्—

नैव श्रीरमणीविनीलकवरीभारेषु भूषात्मता
स्वप्नेष्वप्यभिरामशङ्करपदाम्भोजेऽर्हणोपायता।
चिन्त्येत्युरुर्वनिष्फलत्वविमनो माभूः सुम ! प्राग्रभो !
यत्सर्वद्रुमपौष्पसाररसिकः सेविष्यते त्वामलिः॥

सरो :— नाथ ! सुकुमारतरेयमाश्वासनसरणिः। किञ्चात्र व्यङ्ग्योऽप्यर्थः कश्चन प्रतिभाति। व्यङ्ग्यो ह्यर्थः सौरभं कवितायाः।

गुण :— तमावेदयतु प्रियसखी।

सरो :— तद्यथा धीनिपुणतादिगुणभूषितस्यापि केनापि वा कारणेन परैरनादृतस्य जनस्य कालान्तरे समादरोऽवश्यं-भावीति।

गुण :— सरसतया कल्पितोऽयमर्थः प्रियतमया।

सरो :— स्वाभिलषितमर्थं व्यङ्ग्यमर्यादयैव सूचयन्ति ननु कवयः।

गुण- ततोऽपि सुकुमारतरः प्रयोगो विलासिनीनां जन्मसह-भवोऽस्ति।

सरो :— नाथ ! कथमसौ सम्भवति ?

गुण :— प्रिये ! शृणु प्रयोगस्य तरतमभावम्।

साधयन्ति निखिलं निजमर्थं
साधवो रुचिरवाग्विनियोगात् ।
व्यङ्ग्यभावकलनात्कवितार
श्चक्षुरन्तवलनान्मदिराक्ष्यः ॥

क्षेत्रपालः — (आगत्य) स्वामिन्! सुधापूर्णनामा कश्चन नागरिकस्त्वां द्रष्टुमिच्छति ।

गुण :— अवश्यं प्रवेशय। (क्षेत्रपालो निष्क्रान्तः)

सरो :— नाथ! कोऽसौ सुधापूर्णः ?

गुण :— मम सखाऽयं प्राणसमः ।

सरो :— (स्मृतिमभिनीय) गजविमोचनसमये यस्तव पार्श्ववर्ती स एवायमिति मन्ये ।

गुण :— तथैव। (सुधापूर्णः प्रविशति)

गुण :— (आलिङ्ग्य) सखे! चिराद्दृष्टो भवान्!

सरो :— (उत्थाय) नमस्ते महाभागाय। (इति नमस्करोति)

सुधा :— सुशीले! नित्यकल्याणी भूयाः ।

गुण :— उपविशामः। (सर्वे उपविशन्ति)

सुधा :— सखे! गुणचन्द्र! श्रुत्वा वां माङ्गल्यवैभवं द्रष्टुमागतोऽस्मि। शृण्वत्र सत्यवचनम् ।

पितुरनुपमवित्ताज्ञीचभावाभिमृष्टा -
च्च्युतसुभगपदोऽपि प्राग्जनुःपुण्ययोगात् ।
सुमतिभिरभिनन्द्यं प्राप्तवांस्त्वं कलत्रं
मणिरिव खनिपार्श्वाद्भ्रंशितः स्वर्णसङ्गम् ॥

गुण :— सखे ! नगरविशेषाञ्छ्रोतुमिच्छामि ।

सुधा :— किं वच्मि ! नवाभिषिक्तः प्रभुः केवलं नीतितत्परः । तस्य स्यालो रक्षाधिकृतस्तु शौर्यवानपि नीतिदूरः । तेन जनाः खिद्यन्ते । पश्य —

रक्षणाधिपतिदुर्विधीभवत्
सौख्यहेतुरपि राजशासनम् ।
दुःखमावहति तोयमम्बुदा—
वर्जितं लवणसागरे यथा ॥

किञ्च —

राजा चेत्परिपाल्यलोकमुखरागैकानुरागी चरे
न्यक्कारैकपरो भवेदनुचरोऽप्यन्यः कथं स्यात्तदा ।
धूर्ताः प्राभवमाप्नुवन्ति सुजना ध्वस्तात्मरक्षाः सुखं
निर्वोढुं प्रभवन्ति नैव सततं दैनन्दिनीं जीविकाम् ॥

गुण :— मित्र ! शृण्वत्र निगूढां राजनीतिम् ।

नीतिः शौर्यमुभे शुभेऽपि नितरामेकैकशो दुर्बले
सन्दध्यान्ननु तद्द्वयं समगुणीभावाय नेता भुवः ।
एवं चेत्प्रभुता हि तस्य सुदृढा रुन्ध्याज्जनं स्वैरिणम्
शुण्डालं तृणपुञ्जयुग्मयमिता रज्जुर्यथाऽनर्गलम् ॥

किञ्चालोच्यमाने सर्वत्र लोकव्यवहारेऽयमेव सत्य इति प्रतिभाति । तद्यथा —

नीतिर्भीतिः केवला राज्यतन्त्रे
शौर्यं क्रौर्यं स्यात्तथा केवलम् ।

एतद्युग्मं विद्रुमेणेव मुक्तां
य: सन्दध्यात्स प्रवीणो नृनेता ॥

सुधा :— त्वदुक्तिर्युक्तिसहा दृश्यते ।

गुण :— सखे ! लोकाराधनेऽवश्यं भवता सहायेन· भवितव्यम् ।

सुधा :— मित्र ! सर्वथा त्वामनुवर्तिष्ये । अनुमन्यस्वाद्य गमनाय । ( इति निष्क्रान्तः )

सरो :— नाथ ! नीतिदूराः पीडयन्ति खलु साधूनधिकारिणः ।

परिचारकः — ( आगत्य भीतिं नाटयन् ) स्वामिन् ! राजस्यालो दुर्दान्तः सपरिवारोऽत्रागच्छति । इत्युक्त्वा निर्गतः )

सरो :— नाथ ! किंनु तस्य कार्यमत्र भवेत् ?

गुण :— न खल्वहं जाने किं नु तत्स्यात् ।

सरो:— दुष्टोह्यसौ कमप्यभिचारं मनसिकृत्यायातीति शङ्कते मनः ।

गुण :— प्रिये ! स्वभावशुद्धानां न कुतोऽपि भीतिः सम्भवति पश्य —

हृदि यस्य शुद्धभावो
नितरां सम्भवति तस्य नो भीतिः ।
यत्र हि शशिकरनिकर
स्तत्राऽस्ते नैव तामसी वृत्तिः ॥

( ततः प्रविशति राजश्यालः सपरिवारः )

गुण :— ( उत्थाय प्रणमति )

दुर्दान्तः — किमुपायः प्रह्वीभावो दोषनिगूहनाय कृतदोषस्य ?

गुण :— गुणचन्द्रो दोषवानित्यननुमतोऽयं विषयः ।

दुर्दान्तः — क्रोधरेण भूस्वमिना निपातितस्त्वयि बलवानभियोगः ।

गुण :— नावयोः कश्चन व्यवहारः प्रचलति।

दुर्दान्त :— तस्य महितात्मनः सस्यसम्पदपहारिता त्वयेति।

गुण :— शान्तं पापम्। अनुचितोऽयम् वचःप्रबन्धः।

सरो :— ( भर्तारमुद्दिश्य ) नाथ! भूतपूर्ववृत्तान्तमनुस्मृत्य दुश्शीलेन तेन कल्पितोऽयमभियोग इति निश्चीयते।

दुर्दान्तः — अयि गुणचन्द्र! तव दोषित्वाऽदोषित्वविचारस्य नैतत्स्थानम्। स तु राजसन्निधौ प्रचलिष्यति। तव निर्बन्ध एवाद्य मया निर्वर्तनीयं कर्म।

सरो :— महाभाग! अविचिन्त्यैव भूतार्थं भवादृशां नैवं युक्तमनुष्ठातुम्। पश्यतु राजबन्धुर्भवान्।

राजदण्डो हि दुष्टेषु युज्यते नैव साधुषु।
साधवः शुद्धमनसः सदा लोकोपकारिणः॥

गुण :— अयि रक्षाध्यक्ष! शृणोतु भवानत्र सत्यमर्थं।

चिन्तयामि न परस्य पीडनम्
दीनलोकमभिसेवितुं यते।
सोऽहमेतदभियोगकारणं
निश्चिनोमि परकल्पितं हठात्॥

दुर्दान्त :— अयि! तत्सर्वं धर्मासने निश्चेष्यते। अनुसर माम् अन्यथा त्वां रज्जुबद्धं कुर्याम्।

गुण :— नैवमायासयिता भवेयमत्र राजस्यालस्य। (इति तेन सह गन्तुमिच्छति)

सरो :— नाथ! किमेकाकिनीं मां परित्यजसि?

गुण :— प्रिये ! न भेतव्यम् धैर्यमवलम्ब्य स्थीयताम् । सौशील्य मनुपालयितव्यम् । तेन सर्वमनुकूलतया परिणंस्यति ।

सरो :— अहमप्यनुवर्ते जीवितेश्वरम् ( इति भर्तारमनुसरति )

दुर्दान्तः :— सुखेन गेहे तिष्ठ भामिनि ! कुतोऽयं तव दुःखानुभवः ?

सरो :— अयि ! भ्रातः ! कथमेतत्संभवति ? पश्यात्र सत्यम् —

भर्ता यदि स्याद्विमनास्तदास्य<br>
सधर्मिणी शोकहतान्तरात्मा ।<br>
तथा हि दीपो धृतकज्जलश्चेत्<br>
शिखापि तस्य प्रविलुप्तशोभा ॥

दुर्दान्तः :— अयि ! त्वरिततरं गच्छ ( इति गुणचन्द्रं त्वरयति )

सरो :— नाथ ! कथं जीवेयमेकाकिनी ? (इति पटान्तेन मुखमावृत्य रोदिति)

गुण :— प्रिये ! मारोदीः । धैर्यमवलम्ब्य शोको रोद्धव्यः । पश्य—

सह्यतां सह्यतां शोको न तत्र विमना भव ।<br>
आकुक्षिशयनाज्जन्तोरनुयायी सुहृद्धि सः ॥

( इति वदन् रक्षाध्यक्षमनुसृत्य गतः )

सरो :— हा दैव ! भवतोऽपि दुष्टेष्वेव पक्षपातो न साधुषु ! हा दुरात्मन् ! श्रीधरहतक ! दौष्ट्यमवलम्बसे !

पापानां वित्तदृप्तानां धर्मचिन्ता न विद्यते ।<br>
कामयन्ते भर्तृमतीः पीडयन्ति च तत्पतीन् ॥

किं वा पातयितव्यमपरमस्ति दुःखं मयि दैवेन ? नाथस्य वचनेनैव धृतिमवलम्ब्य सहेयं दुःखमिदम् । लोकवृत्तान्तोऽप्येतादृशो दृश्यते । यथाहि—

दुष्टः परार्थैकफलान्हि साधून्
प्रबाधते वायुरिव द्रुमौघान्।
शान्ते तु तस्मिन् पुनरुच्चशीर्षाः
स्वभूतिभिर्लोकमुपासते ते ॥

(नेपथ्ये) आवृणुतावृणुत गुणचन्द्रस्य वेश्म मुष्णीत मुष्णीत सस्यसंपदमस्य।

सरो :— (आकर्ण्य) किमिदं धूर्ताः श्रूयन्ते ? दिवाऽपि चोराः प्रचरन्ति ? (पुरोऽवलोक्य) अहो धूर्ताः किराता आयुधपाणय इत एवागच्छन्ति। अन्यत्र गच्छामि। (किराताः प्रविशन्ति)

सरो :— (भीतिमभिनयन्ती) अयि ! धूर्ताः। किमेतदनुचितमनुष्ठीयते भवद्भिः ? बिभेमि भवदवलोकनाद् दूरमपसरत। (तेषामधिनायकः पुरत आगत्य) तरुणि ! दूरमपयाहि सर्वमपहर्तुमागताः स्मः।

सरो :— (आत्मगतम्) चिन्तितमत्याहितमुपरि निपातितं दैवेन। किंकर्तव्यमत्र ? (किरातानुद्दिश्य) अयि ! नैतदुचितं कर्म यदनुष्ठीयते भवद्भिः।

किरात :— भामिनि ! नैतत्केवलमस्माकं निर्वर्तनीयं कर्म किन्तु त्वदपहरणमपि।

सरो :— महाभागाः ! किंवाऽपकृतं मया भवताम् ?

किरात :— भामिनि ! शृणु तावद्वक्तव्यमिदम्।

मत्स्वामी श्रीधराख्यस्तु प्रार्थयं स्तव सङ्गतिम्।
निराकृतस्त्वया पूर्वं तस्यैतत्फलमाप्नुहि ॥

सरो :— धिक् प्राभवं दुर्जनानां येतु विशुद्धमपि भावस्वातन्त्र्यं न सहन्ते परस्य। अत एव प्रजापालकस्य प्रथमानुष्ठेय मिदम् कर्म। यथा —

हन्याद्दुष्टान् प्रभुश्शक्तः सर्वविद्रोहकारिणः।
कृषीवलः प्रयत्नेन सस्यघ्नान्कीटकानिव॥

किरात :— अयि! सुन्दरि! नह्यत्र प्रतीकारावकाशोऽस्तीति न मन्तव्यम्। यतोऽयमद्यापि त्वदभिषङ्गमपेक्षते मत्स्वामी।

सरो :— शान्तम् पापम्। धूर्तकामुकाः पीडयन्ति निभृतमङ्गनाः। यथाहि —

परानभिज्ञेयविकारचेष्टितै
रवद्यलेखैः परसङ्गकल्पनैः।
बलाच्च पीडां जनयन्ति दुर्जना
स्तथाऽपिरक्षन्त्यबलाः सुशीलताम्॥

धिङ्मूर्खाणां प्रलपितम्। विदार्यतां बहुधा युष्मज्जिह्वा। अन्यथा किमेतैस्तन्नियोज्यैः? तस्यैव दुरात्मनः शीर्षं शतधा विदीर्णं भवतु। (किंचिदिवालोच्य) इत्थम्भूते मम दौर्गत्ये किमनयाऽपि दुश्चिन्तया?

किरात :— अयि! भामिनि! आत्मीयमेव सौख्यं परिचिन्तय। तव भर्तुर्मरणदण्ड एव भविष्यति। किमेतेन दुर्दशानुभवदुर्विचारेण। अनुमन्यस्व शीघ्रम्। सुखयिष्यति त्वामयं भूस्वामी।

सरो :— किरातनायक! मानवीं मां परिगणय।

किरात :— अयि ! मूढमते ! प्रसह्य मरणापेक्षया सुखजीवनमेव अपेक्ष्यमस्ति जनिमताम् ।

सरो :— पिधेहि मुखं विवेकदूर ! नैव जानासि कुलस्त्रियमिमाम् पश्य —

म्रियेत वा जीवतु वा सरोजिनी
कुलाङ्गनेयं कुलटा कथं भवेत् ?
चिरं हि यन्त्रेण निपीडिताऽपि सा
जहाति माधुर्यगुणं न गोस्तनी ॥

किरात :— अयि ! मूढे ! दरिद्रस्य कोपो निजोष्ठस्य ताप इति कस्मै कुप्यसि ? अत्रजकुहरमेव निलयीकृत्य हितमुपदिशामि । आत्मसुखमपि न जानासि । पश्य मम प्रतापम् ( किरातानुद्दिश्य ) अयि ! किराताः ! पाशैर्बध्नीत दुर्भगामिमाम् । नयत किरातनगरीम् । तत्र बन्दीभवितुमर्हति। ( किरातास्तां परित आक्रमन्ति )

सरो :— अत्याहितमुपस्थितम् । कथमिमां ज्ञास्यति दुर्दशां मे नाथः ? आशासे महात्मनस्तस्य शुभसन्ततिम् । इयमेकैव मम चरमा प्रार्थना ।

नाथस्य संयोगमुपैमि नोवा
तस्मै सदा सौख्यमुमा ददातु ।
जन्मान्तरेऽप्येष गुणाभिमानी
पतिर्भवेत्प्राणपतिर्यतोऽसौ ॥ ( इति रोदिति )



किरात :— अयि ! बालिशे ! परिचिन्तय मम सदुपदेशम् ।

परेद्युरागमिष्यामः । अद्यतु सस्यमेवापहरिष्यामः । (इति किरातैस्सह निष्क्रान्तः)

सरो :— अत्र वसतिर्नश्रेयस्करी । कुत्राप्यन्यत्र गत्वा प्राणान्धारयामि । यदि कदाचिदत्रागमिष्यति पुण्यवान्मे पतिस्तदा ज्ञास्यति मम दुःस्थितिम् । (इति लेखमेकं विलिख्य शिलाधःस्थले निक्षिप्य) अहो दुष्टस्य धनवत्ता सर्वानर्थकारिणी । यतोहि —

कश्चिद्बिभेति नियतेर्वृजिनाद्धि कश्चित्<br>
कश्चित्पराभिभवतो नृपतेश्च कश्चित् ।<br>
संपद्विशेषपरिवर्धितदुष्टबुद्धे<br>
र्नैवास्ति नैवमयशो नृपनिर्नधर्मः ॥

(इति निष्क्रान्ता)

इति महीधरोपाह्वयेन वेङ्कटरामशास्त्रिणा<br>
विरचिते सरोजिनीसौरभे नाटके<br>
षष्ठोऽङ्कः ।

# श्रीसरोजिनीसौरभे

## सप्तमोऽङ्कः

—□—

सुधापूर्ण :— (प्रविश्य नभोभागमवलोक्य) कालो हि भगवान् जगदीशः, यतोऽयं वस्तुमात्रस्य प्रकाशाऽप्रकाशतां परिवर्तयति । तथाहि —

प्रभातभावात्परिहीणरोचिषः
स्वभावतः सत्पथवर्तिनोऽप्यमी ।
यथार्हमाभान्ति न तारकागणा
दशापकर्षेणतु सज्जना इव ॥

श्रुत्वा मित्त्रस्य निरपराधकारागारनियन्त्रणं नितरा-मुद्विजते मनः । अधिगतरक्षाधिकारमपि निष्करुणं राज-स्यालमनुस्मृत्य दुःखमुत्पद्यते । निष्करुणानां प्रवृत्तिः सर्वदा विरसैव भवति । तथाहि —

दयारसं विन्दति नैव यो जनो
रसात्मकं तस्य कथं नु जीवितम् ।
सुधारसस्वादुजलैर्नदीशतै
र्वृतोऽपि नित्यं लवणो हि सागरः ॥

प्रभुस्तु नीतिमानुदारमतिश्च भवति । तथापि परसुखराग-निरतत्वमस्य नियतो दोषः । दिवसेऽस्मिन् राजधान्यां

राजमन्दिरे सख्युरभियोगविचारः प्रचलिष्यतीति श्रुतम्। वादीचात्र दुर्मतिः श्रीधरः रक्षाध्यक्षो राजस्यालो नीतिदूरो द्रविणलालसश्च। कालज्ञवेषेण राजसभां प्रवेक्ष्यासि। राजा च विद्याधिको विद्वदभिमानीच श्रूयते। अतस्तन्मतिमुल्लास्य मित्रं क्रूरदण्डपातान्निवर्तयिष्ये (इति निष्क्रान्तः)

(राजमन्दिरद्वारदेशः)

प्रतीहारी :— आः कष्टतरोऽयं सेवाधर्मः। यतोहि—

आशैशवान्नियमितात्महितप्रचारं
कारुण्यलब्धकवलग्रहशुष्कदेहम्।
रात्रिंदिवं विहितकर्मणि दत्तदष्टिं
द्वारदेश एष निरुणद्धि पशुं यथा माम्॥

वृद्धस्य प्रभोरपेक्षया नवाभिषिक्तस्य राज्ञः पेशलभावेन मयाऽद्य स्वैरगतिः समुपलब्धा। तस्मात्सुखमुपविशामि। (इत्युपविशति। कालज्ञवेषेण सुधापूर्णः प्रविशति)

सुधा :— पृच्छाम्येनं राजदर्शनस्यावकाशम् (प्रतीहारिणमुपेत्य) अयि! प्रभुदर्शनमपेक्षे। समुचितं समयं निवेदय।

प्रती:— (उपविशन्नेव चक्षुषी निमील्य) गच्छ गच्छ! नायमवसरस्तस्य।

सुधा :— अयि! भोः! कालातिपातं न सहते मे कार्यभरः। परिशील्यतां समयविशेषः।

प्रति :—तर्हि प्रविशान्तर्निर्विचारम्।

सुधा :— अयि! नोचितं खल्विदं यत्पूर्वमनिवेद्य प्रभूणामग्रतो गन्तुम्।

प्रती :— निर्भीकः सन् प्रविश। प्रभुर्हि नितरां स्वभावपेशलः।

सुधा :— (स्वगतम्) अहो ! प्रभोर्मृदुलतादोषः सर्वथाऽनर्थायैव भवति। तद्यथा —

अधरोत्तरत्वभेदो
नश्यति हृदयेषु सेवकानां हि।
राज्ये क्रियाऽपि लुण्ठति
यदि राजा नित्यपेशलो भवति॥

एवं हि दृश्यते लोके। तद्यथा —

सादी यदा भवेच्छक्तस्तदाश्वः साधु धावति।
पातयित्वान्यथा भूमौ प्रघट्टयति तं खुरैः॥

अज्ञोऽयं दौवारिकः। यत्किंचिदस्य हस्ते निक्षिप्य कार्यं साधयामि (प्रकाशम्) अयि! राजपुरुष! गृहीत्वेदं मदीप्सितं निर्वर्तय। (इति तस्य हस्ते किंचिन्निक्षिपति)

प्रती :— (गृहीत्वा सहर्षमुत्थाय) विद्वन्नमस्ते निवेदयामि भवत आगमनं महाराजाय। (इति निर्गतः)

सुधा :— ईदृश एव लोकव्यवहारः। तद्यथा —

न विद्वत्ता न वा शौर्यं न रूपं न शुचिर्मतिः।
कार्यनिर्वहणे दक्षा राजद्वारि धनं विना॥

उत्कोचो नैव दोषः स्याद्राजकार्यमभीप्सतः।
इति कण्ठरवेणाह स्वनीतौ रक्षसां गुरुः॥

उत्कोच

प्रती :— (आगत्य) महात्मन्! अन्तः प्रविश राजाचैकाकी भवदागमनं प्रतीक्षते।

सुधा :— (प्रविश्य दूरत एव राजानं दृष्ट्वा स्वगतम्)

धीरात्मा बुधचन्द्र एष नृपतिर्विद्वान्वपुष्मान्वशी
लोकाराधनतत्परश्च मतिमान् धर्मागमे कोविदः।
एवं चापि परं दयारसपरीतात्मा मृदुः, स्वैरिणं
लोकं दुर्जनसंगतिं च सहते तेनाऽस्ति पीडा सताम्॥

नैतदुचितमधिनायकस्य यत्सर्वात्मना पेशलभवेन सर्वंसहत्वम्।(प्रभुसमीपं गत्वा) महीनायक!

स्वतः शुभौ चन्द्रवुधौ परस्य
दोषेण पापौ गणितौ भशास्त्रे।
विराजमाना ववरोधनाशाद्
दत्तां शुभं तुभ्यमतः प्रजाभ्यः॥

राजा :— (सुधापूर्णं दृष्ट्वा) कालज्ञ इव प्रतिभाति भवान्।

सुधा :— प्रभुप्रसादात्तथाविधोऽहम्।

राजा :— विद्वन्! नमस्ते। आसनमलङ्करोतु भवान्।

(सुधापूर्ण आसन उपविशति)

राजा :— नामाक्षराणि श्रोतुमिच्छामि।

सुधा :— ज्योतिर्विशारदः सुधापूर्ण इति मां जनाः कथयन्ति।

राजा :— को वा भवतामभिजनः?

सुधा :— चन्द्रद्वीपः।

राजा :— किमर्थोऽयमतिदूरसञ्चारखेदो भवतः।

सुधा :— भवान् विद्वत्प्रभुरिति द्रष्टुमागतोऽस्मि।

दौवारिकः :— (आगत्य) प्रभो! पश्चाद्वद्धं कञ्चन पुरुषमादाय

रक्षाधिकृतः मान्यवेषधारिणौ द्वौ पुरुषौ च प्रभोर्दर्शन मपेक्षन्ते ।

राजा :— (स्मृतिमभिनीय) नन्वद्य श्रीधरस्याभियोगविचार-दिवसः। सर्वान् प्रवेशय ।

(प्रतीहारी निर्गतः। श्रीधरः आढ्यपतिः गुणचन्द्रेणसह रक्षाधिकृतश्च प्रविशन्ति )

राजा :— आसनान्यलंकुर्वन्तु महात्मानः (गुणचन्द्रं विना सर्वे उपविशन्ति )

सुधा :— (गुणचन्द्रमपाङ्गेन पश्यन्नात्मगतम्) सखे ! गुणचन्द्र !

परिहरसि महर्द्धिं दोषमालक्ष्य तस्या
मनुभवसि परेषां क्लेशमालोक्य खेदम्
अपि समधिकशक्तिः खिद्यसे धर्महेतो
र्नभवति खलु लोके त्वत्समः सच्चरित्रः ॥

राजा :— ( सुधापूर्णं वीक्ष्य जनान्तिकम्) विद्वन् ! कथममुं दोषिणमवैमि? यतोह्यस्य —

संस्कारहीनेऽपि मुखे विराजते
तेजोविशेषः परिपन्थिभीकरः।
आनन्दरेखात्मविशुद्धिसूचिका
क्लेशेऽपि चन्द्रांशुरिवावभासते ॥

सुधा :— राजन् ! भवत इव ममाऽप्यस्ति तादृशो भावसमुदयः।

राजा :— श्रीधर! कोऽयमभियोगस्तव?

श्रीधर :— अपहृतमनेन मदीयं सस्यजातम् ।

राजा :— अयि! दोषिन् ! (इत्यर्थोक्ते ) अयि महाभाग ! अपि सत्यमिदम्?

गुण :— प्रजानायक ! कल्पितमिदमहैतुकम् ।

सुधा :— स्वभावोह्ययमसाधूनां यत्किञ्चिन्मनसि कृत्वा साधुष्वसत्यारोपणम् ।

राजा :— श्रीधर! कथमाशङ्कितमयं दोषवानिति ?

श्रीधर :— मम सस्यमस्य क्षेत्रभागे निगूहितमासीत् ।

राजा :— तत्तु केनवाप्यन्येन तथा कृतमिति कथं नानुमीयेत ?

श्रीधर :— आबाल्यादयं दुश्चरित्रः ।

राजा :— कथमेतन्निश्चीयते ।

श्रीधर :— पितैवास्य साक्षी महानाढ्यपतिः (इत्याढ्यपतिं दर्शयति)

राजा :— आढ्यपते ! अपि नाम सत्यमिदम् ?

आढ्य :— शिरश्चालनेन सत्यतां सूचयति ।

सुधा :—(जनान्तिकम्) राजन् ! मुखरेखाह्यस्य दारत्यागिता-दोषं सूचयति ।

राजा :— (स्मितं कृत्वा) आढ्यपते ! किमयं भवतः कुमारः ?

आढ्य :— अथकिम् ।

राजा :— अस्य नामाक्षराणि श्रोतुमिच्छामि ।

आढ्य :— गुणचन्द्रः ।

सुधा :— राजन् ! आकृतिसदृशं नामधेयमपि ।

राजा :— (गुणचन्द्रमुद्दिश्य ) [illegible] तव जनकः ?

गुण :— अयंतु मम जन्महेतुः पिता ह्यासीत् ।

राजा :— कथमयं भूतकालिकः प्रयोगः ।

गुण :— मां परित्यक्तवानयं महाभागः ।

राजा :— अपि केवलं भवन्तं परित्यक्तवान् ?

गुण :— मम जनन्यपि मया सह तथाविधा जाता । मृता च ।

राजा :— (जनान्तिकम्) विद्वन् ! वैदुष्ये भवान् पराशरो ज्यौतिषिकः । (प्रकाशम्) श्रीधर! न केवलमयं पुत्रत्यागी किंतु दारत्यागी च । कथमसौ विश्वसनीयः स्यात् ?

(श्रीधरः आढ्यपतिश्च नताननौ स्तः)

सुधा :— राजन् ! गुणवन्तमपि पुत्रं द्विषन्तं मन्यन्ते दुरहन्ता-दूषिताः पितरः ।

गुण :— (कालज्ञं दृष्ट्वा स्वगतम्) अयंहि विद्वानाकारेण स्वर-योगेन च सुधापूर्ण इवाभाति (विमृश्य) सरूपा हि दृश्यन्ते मानवाः ।

राजा:— गुणचन्द्र ! कुत्र वा निवासस्तवाधुना ?

गुण :— सुजनपुरग्रामे ।

राजा :— को वा समुद्योगः ?

गुण :— प्रभो ! कृषिकर्म ।

सुधा :— यद्यपि विशुद्ध आजीवस्तथाऽपि रूपसौष्ठवस्याननुगुण एव भवति ।

राजा :— नास्त्यत्र सन्देहः ।

गुण :— राजन् ! स्वातन्त्र्यं नापहन्तीत्ययमाजीवः समादृतः ।

सुधा :— प्रभो ! साधुरयं विद्वानिव च दृश्यते ।

राजा :— वागेव कथयति विद्वत्तागुणमस्य ।

(श्रीधरो वदनमवनमयति )

सुधा :— ( जनान्तिकम् ) राजन् ! महापुरुषलक्षणान्यपि च दृश्यन्तेऽस्मिन् युवमिव ।

राजा :— अयि ! श्रीधर ! शृणु मद्वचनम् ।

यत्राकृतिस्तु रुचिरा
शुभतरगुणराशिरस्ति खलु तत्र ।
कथमेनं निश्चिनुयां
तस्करतादोषदुष्टधीकलुषम् ॥

(सुधापूर्णं विलोक्य) विद्वन् ! किमत्र कश्चन सन्देहोऽस्ति भवतो मदुक्तिषु ?

सुधा :— नरोत्तम ! महतां वचनानि कथमुपहतार्थानि भवन्ति ! यत्राकृतिस्तत्र गुणा इति हि सामुद्रिकवचनम् । (गुणचन्द्रः किंचिदवनतमुखस्तिष्ठति) (नेपथ्ये रोदनध्वनिः)

राजा :— (कर्णं दत्त्वा) अये ! किमेतत् ? (पुनर्नेपथ्ये) भूनायक ! रक्ष्यतां रक्ष्यतामस्मज्जीविका ।

राजा :— स्त्रीणामार्तध्वनिरिवश्रूयते । सर्वथा ह्यनुपेक्ष्या स्त्रीणामनव्योक्तिः । कस्कोऽत्रभोः ।

(दौवारिकः प्रविशति)

राजा :— ताः प्रवेशय ।

दौवा :— तथेति निष्क्रान्तः ।

(तिस्रः स्त्रियो रुदत्यः प्रविशन्ति)

राजा :—कोवा हेतू रुदितस्य ?।

स्त्रिय :— प्रभो! अस्माकं फलितसिद्धं सस्यमपह्रियते किरातैः प्रतिदिनम्।

राजा :— कथं साहसं कर्म कुर्वन्ति ते !

स्त्रिय :— भूनायक! एवं हि जनाः कथयन्ति यथा केनचन भूस्वामिना परवैरनिर्यातनाय प्रेरितास्ते किराताः प्रथमं सुजनपुरग्रामे दुष्कर्मणि प्रवृत्ताः। तावन्मात्रेणाऽपरितुष्टाः परिसरग्रामेष्वपि दौष्टयमाचरन्तीति।

सुधा :— राजन्! दुर्जनस्य प्रवृत्तिरेवंविधैव। तद्यथा —

न शान्तिमायाति गतेऽपि हेतौ
प्रकोपिता दुर्जनचित्तवृत्तिः।
विच्छिन्नमूलाऽपिच धूमपंक्तिः
प्रबाधते व्याप्य दिशो हि दृष्टिम्॥

अतः सर्वथा न प्रकोपयितव्या दुर्जना लोकजनेन।

राजा :— विद्वन्! कथमपहर्तुमुत्सहन्ते परसंवर्धितामपि सस्य-संपदम्।

सुधा :— प्रभो! किं वच्मि? पश्यतु भवान्।

दुर्जनोहि परसंभृतं धनं
तस्करोत्यविगणय्य तच्छ्रमम्।
घातुको नियतवञ्चको वृकः
प्रेमवर्धितमृगार्भकं यथा॥

(श्रीधरो मुखमावर्ज्य तिष्ठति)

सुधा :— (जनान्तिकम्) राजन् ! श्रीधरस्य मुखमवलोक्य तत्र तत्प्रेरयिताऽयमेवेति शङ्कते मे मनः ।

राजा :— (श्रीधरं वीक्ष्य) विद्वन् ! तथैवावगम्यते । (स्त्रीरुद्दिश्य) गच्छन्तु भवत्यः । अचिरमेव सर्वं साधु सम्पद्यते । (ता गताः) दुर्दान्तं वीक्ष्य) अयि प्रथममेनं विमुक्तबन्धं द्रष्टुमिच्छामि ।

श्रीधर :— (भीतिं नाटयन्) प्रभो ! अनुचितमस्य महापराधिनः ।

सुधा :— राजन् ! भीतिरेवास्य कथयति नितरामभियोगः कृतक इति ।

राजा :— पश्यन्तु सर्वे —

मणिमालोचितपाणेः
कथमुचितो भवति गर्ह्यनिगडोऽयम् ?
सुमदामोचितशिवशुभ-
शीर्षतलस्योर्णनाभतन्तुरिव ॥

दुर्दांत :— (राजानं वीक्ष्य) ननु कृतापराधस्य निगडबन्धमनुचितं मन्यते भवान् ?

राजा :— नाहमेनमपराधिनं मन्ये ।

दुर्दांत :—अहन्तु तथाविधं विश्वसिमि ।

राजा :— प्रमाणमत्र ब्रूहि ।

दुर्दांत :— महितस्य श्रीधरस्य वचनमेव प्रमाणम् ।

राजा :— नाहमस्य वचनं श्रद्दधामि ।

दुर्दांतः— साक्षिणोवचनमप्यस्य दोषितां द्रढयति ।

राजा :— नह्यत्र विश्वासः।

दुर्दांत :— नन्वयमाढ्यपतिः श्रीमान्।

राजा :—श्रीमन्तः सर्वात्मना विश्वसनीया इति कुत्राऽस्ति ?

दुर्दांत :— तर्हि किमत्र कर्तव्यम् ?

राजा :— वन्धविमोचनमेव समुचितं कर्म।

दुर्दांत :— (अनिच्छयापि तथा करोति)

राजा :— महात्मन् ! गुणचन्द्र ! सर्वथा निरपराधो भवान्। आसनमलङ्करोतु।

सुधा :— धर्मज्ञ ! उचितमेवास्ति सभाजनमस्य महितगुणस्य।

गुण :— (आसन उपविशति)

दुर्दान्त :— (कोपादासनादुत्थाय राजानं दृष्ट्वा) रक्षाधिपतिं मामवमन्यसे। द्रक्ष्यसि च मम दण्डचण्डतामचिरेणैव। पश्य —

> त्वं नृपोऽपि च नितान्तमधीरः
> शक्तिमानहमतीव च शूरः।
> त्वां निवध्य विभुतामधिगम्य
> स्वीकरोमि भवतो नृपलक्ष्म॥

(इत्यङ्गुल्या तर्जयन्निर्गतः)

सुधा :— राजन् ! धीराणामपि क्षमतागुणमधीरतादोषं गणयन्ति धूर्ताः।

राजा :—श्रीधरमाढ्यपतिं च दृष्ट्वा) भवन्तावपि गच्छतामुभौ।

(तौ निर्विण्णवदनौ निष्क्रान्तौ)

सुधा :— राजन् ! मूर्खोऽयं रक्षाधिकृतः यो हि भवन्तमप्यधिक्षिपति।

राजा :— अल्पीयानयम् । अनेन सङ्गतिरयशस्करी भवति ।

सुधा :— राजन् ! सत्येयमुक्तिः । यतोहि —

मैत्र्यमल्पगुणेनोच्चैश्शिरसां पतनावहम् ।
हर्म्याग्रे पतितं पक्षिविष्ठाबीजमिव क्रमात् ॥

राजा :— कथमेतस्य क्रौर्यादात्मानं परिरक्षामि ?

सुधाः— नोचितमेवं भवादृशां विक्लवत्वम् । यतो हि —

हुङ्कारमात्रेण बिभेति भीरु-
र्धीरस्तु किञ्चिन्नविकारमेति !
कालुष्यमीयाद्गिरिनिम्नगा द्रा-
गब्धिः कदाचिन्नहि मेघशब्दात् ॥

राजा :— विद्वन् ! उपायमत्र चिन्तय !

सुधा :— राज्ञः कर्णे किञ्चिज्जल्पति ।

राजा :— (गुणचन्द्रं वीक्ष्य ) अयि! मित्र ! भवतो रूपसौशील्यादयो गुणास्त्वां रक्षाध्यक्षं कर्तुमुत्साहयन्ति मां ।

सुधा :— समुचितोयं सङ्कल्पः ।

गुण :— अधिनायकस्यशासनमनुपाल्यं हि ।

राजा :— कथमेनं नियमयिष्यति भवान् ।

गुण :— भवतः प्रसादादेनं दण्डितमनायासेनैव कुर्याम् ।



राजा :— तर्हि सपरिवारो भव ।

गुण :— राजन् ! अहमसहाय एव प्रभवामि तमवस्कन्दितुम् ।

सुधा :— महावीर ! त्वयि सर्वमेतदुपपद्यते । तथाऽपि सपरिवारता प्रभुलक्षणं हि । पश्य—

नाधिकं शोभते राजा परिवाराद्विना भुवि ।
प्रासादस्तुङ्गशृङ्गोऽपि प्राकारेण विना यथा ॥

राजा :— निर्वृतमद्य मे मनः यदितः परं धर्मो वर्धिष्यते ।

सुधा :— सर्वोयं मन्त्रः प्रयोगावधि निगूढ एव तिष्ठतु । यतोहि—

प्रयोगकालादपरत्र नैजा-
न्यङ्गानि संगूहति राज्यलक्ष्मीः ।
प्राणेश्वरस्याप्युपभोगकालं
हित्वा वयोङ्गानि यथा कुलस्त्री ॥

किञ्चाहमेवमाशासे ।

ज्ञानशूरत्वगुणयोर्निधानं हि युवामुभौ ।
बुधादित्यसमावेश इव वां सङ्गतिश्शुभा ॥

राजा :— विद्वन् ! भवदाशीरवश्यं फलिष्यति ।

सुधा :— अयि ! बुधचन्द्रगुणचन्द्रौ ! भवतोः पृथग्विधीन् विवृणोमि श्रूयतां ।

राजातु शासनं कुर्यात्प्रजासंक्षेमतत्परः ।
नीतिमद्भिः समालोच्य प्रेमसंपूर्णमानसः ॥

रक्षाध्यक्षोऽनुतिष्ठेत्तच्छासनं मोहवर्जितः ।
न रुन्ध्यात्तद्गतिं राजा पक्षपातसमन्वितः ॥

बुध - गुण :— तथा वर्तिष्यावहे (इति प्रतिजानीतः)

राजा :— रक्षाध्यक्ष ! अनुतिष्ठ स्वं विधिं धर्मतः । (इति खड्गमेकं प्रयच्छति)

गुण :— प्रभोराज्ञा शिरसा ध्रियते । (इति विनयेन खड्गं गृहीत्वोत्थाय) (सुधापूर्णं दृष्ट्वा) विद्वन्! नमस्ते (इति वन्दते)

सुधा :— शुभं भूयात् । (गुणचन्द्रो निष्क्रान्तः)

राजा :— विद्वन्! भवांस्तु गुरुकल्पो मम । तस्मादस्माकमास्थानसद्मनि गुरुपीठमलङ्करोतु । यतोहि —

निखिलजनसमाजे तन्वते धर्मचिन्तां
क्वचिदपि निजकृत्ये कुर्वते नैव दोषम् ।
जगति शुभवितानं मन्वते जन्मभाजां
नृपसदसि विशुद्धाः पण्डिता मण्डनं हि ॥

सुधा :— राजन् ! अनुग्रहः खल्वेषः । पुनर्दर्शनं करिष्यामि अद्य निर्गमनायानुमन्यस्व ।

राजा :— तथा (इति स्वकण्ठान्मुक्ताहारमुन्मुच्य तेन सुधापूर्णकण्ठमलङ्करोति ।

(यवनिका पतति)

इति महीधरोपाध्ययेन वेङ्कटरामशास्त्रिणा
विरचिते सरोजिनीसौरभे नाटके

सप्तमोऽङ्कः

 

# श्रीसरोजिनीसौरभे

## अष्टमोऽङ्कः

—□—

(नेपथ्ये पटहघोषिकः पटहमाहत्य)

ज्ञायतां ज्ञायतां पौराः रक्षाध्यक्षस्य शासनम् ।
यस्तु सर्वाधिकारी स्याद्घोषिणामनुशासने॥
राजधान्यां च पल्लीषु शाखासु नगरीषु च ।
यो यः साधुषु दौर्जन्यमाचरत्येष दण्ड भाक्॥

माप्नुत माप्नुत भीतिं
नीतिं त्यजन्ति दुर्जना ये ये ।
तान् राजकार्यसद्मनि ।
निःशङ्कमुदाहरन्तु साधुजनाः ॥

कलहं :—(प्रविश्य नेपथ्याभिमुखमवलोक्य) अयि! पटहघोषिक ! किमयं दुर्दान्तएव रक्षाध्यक्षो य एवमाज्ञापयति?
(नेपथ्ये) नहि नहि । स धूर्तः कारावासदुःख मनुभवति । किन्तु महात्मा गुणचन्द्र एवमज्ञापयति ।

भ्रम :— (सत्वरमुपसृत्य ) सखि ! कलहंसिके ! उच्छ्वसितमिवास्ति मे मनो यतोऽसौ महात्मा गुणचन्द्रो रक्षाधिकारपदव्यामधिरोपितो महाराजेन।

कल :— भ्रमरिके ! सर्वमेतदुपपद्यते तस्मिन्युवमिन्त्र । सरोजिनी मुद्दिश्य का वार्ता श्रूयते भवत्या ।

भ्रम :— सा शुद्धशीला भीत्या सुजनपुरग्रामं विहाय कुत्राप्य-न्यत्र गतेति श्रूयते ।

कल :— महत्कष्टमापतितं तस्या वराक्याः ।

भ्रम :— कलहंसिके ! गुणचन्द्रस्याधिकारपदवीं सरोजिन्या दुःख-स्थितिं चाकर्ण्य प्रमोदशोकयोरन्तराले वर्तते मे मनः ।

पश्य—

तोषशोकगतितुल्यवेगतः
शीतमुष्णमपि मेऽश्रु जायते ।
शीतवातरवितापसङ्गते
रूष्मबिन्दुरिव तोयदागमे ॥

कल :— सखि ! जानामि तव मनःस्थितिम् । किमत्र कर्तव्यं भवत्या ?

भ्रम :— किमन्यदत्र कर्तव्यम्? योगिनीवेषमास्थाय प्रथमं सुजन-पुरमेव गच्छामि । ततो गुणचन्द्रस्य सकाशं प्रयास्यामि ।

कल :— तर्हि गच्छ । शुभं भविष्यति । (इति निष्क्रान्ते )

(ततः प्रविशति रक्षाध्यक्षवेषेण कार्यालयं गुणचन्द्रः)

गुण :— निक्षिप्तो रक्षाधिकारभारो मयि राज्ञा । यदि धर्मेक्षिका स्यादधिकर्तुः सोऽपि भारो नैवदुर्भरस्तस्य । तथाहि—

साधुभावमधुरो बहुलोक
स्तत्र वञ्चकगणः परिमेयः ।
तस्य शिक्षणविधौ निपुणश्चे
दक्षणाधिकृत एव सुखावहम् ॥

किन्तु दुर्भरोऽयं सखीवियोगभारः। सा जीवतीत्यपिच न ज्ञायते। नह्यत्र प्रतीकारावकाशोऽप्यस्ति।

भट :— (प्रविश्य) प्रभो भवदाज्ञया सुजनपुरग्रामे तत्परिसरेच किरातानां सञ्चारव्युत्क्रमः संशामितो वर्तते। तेन साधुजनः कृतज्ञतामर्पयति धर्मज्ञाय।

गुण :— गच्छ। स्वीयं कर्म निर्वर्तय। (भटोनिर्गतः)

दौवा :— (आगत्य) प्रभो! काचन योगिनी स्वामिनं द्रष्टुमिच्छति।

गुण :— अवश्यं प्रवेशय (गतो दौवारिकः)

भ्रम :— (प्रविश्यात्मगतम्)

प्रेम्णैव वर्धते जन्तुः प्रेम्णा वर्धयतेऽखिलम्।
यदि न स्यात्प्रेमरसो जीवलोको विनश्यति॥
प्रेमैव कारणं स्वार्थे स्वार्थत्यागेऽपि तत्तथा।
यदि न स्यात्प्रेमरसो नैव स्यादन्तरं नृणाम्॥

प्रेमबन्धेनैव खलुसखी निरतिशयं दुःखमनुभवति॥ (गुणचन्द्रमुपेत्य) महाभाग! अहन्तु भ्रमरिका भवन्तं वन्दे।

गुण :— अयि साधुशीले! रूपवयोऽननुगुणं वेषमुद्वहसि?

भ्रम :— महात्मन्! सखीवृत्तान्तपरिज्ञानाय सर्वत्र सञ्चारक्षममिमं वेषं स्वीकृत्य सुजनपुरमेव गताऽहम्। तत्रेयमवस्था क्षेत्रतले चक्षुर्गोचरी भूता। तद्यथा —

सुपुष्पिता पुष्पवनी विरूपा
फलैर्नतं चाम्रवणं विशाखम्।
विध्वस्तमाहो फलितंच सस्यं
दुर्बुद्धिभिर्ध्वस्तमिदं समस्तम्॥

गुण :— श्रुतपूर्वमेवेदं चारमुखात्सजस्रम्।

भ्रम :— तत्रतु सखी न दृष्टा। परिशीलिते सर्वत्र क्षेत्रभागे कुत्रचन देशे शिलाधो निक्षिप्तं सख्या मृदुकरलिखितमिदं पत्रमुपलब्धं परिशीलयतु भवान् (इति पत्रं ददाति)

गुण :— (गृहीत्वा वाचयति) प्राणेश्वर! दुःखभागिन्यहम्। मत्संसर्गाद्भवानपि दुःखमनुभवति। दुर्भगायास्तु मम विनाशे तवैवधा भद्रं भवेदिति निश्चिनोम्मि। किन्तु ममेय मेकैव प्रत्याशा यद्भाविन्यपि जन्मनि भवानेव मे पतिर्भूयादिति। (पठित्वा दीर्घतरं निश्वसिति।)

भ्रम :— महात्मन्! हृदयविदारकाण्यमून्यक्षराणि। एतेषामर्थो नैव ज्ञायते।

गुण :— भ्रमरिके! स्फुटतयैवावगम्यतेऽस्य पत्रस्यार्थः।

भ्रम :— आर्य! कीदृशः सोऽयमर्थः?

गुण :— कोवाऽन्योऽस्ति? मम भद्रमाशङ्कमाना प्राणानत्याक्षीत्तव सखी। (शोकमभिनयन्) प्रणेश्वरि! किमनुभूतं सौख्यमनेन दुर्भगेन सहवसतिं गतवत्या त्वया? येन जन्मान्तरेऽपि जनस्यैवास्य सङ्गतिरपेक्ष्यते भवत्या (किंचिद्विचिन्त्य) हा! प्राणेश्वरि! तव साधुभावमनुस्मृत्य नितरामुत्ताम्यति मेऽन्तरात्मा। यतो हि —

मह्यं नैव त्वमसि कुपिता साधुशीले! कदाचि
द्धेतुं सृष्ट्वा कथमपि मया कोपिता प्रत्युत त्वम्।
सौन्दर्यं ते समुदितमहं द्रष्टुमेवं कठोरः
कोपे व्यक्तीभवति सहजा चारुताङ्गनानाम्॥

हा ! प्राणेश्वरि ! तव गृहिणीधर्ममिममनुचिन्त्य दुःखमुत्पद्यते ! स यथा —

आकल्पयन्ती चिकुरानरालां
स्त्वत्तदतूत्पन्नसुमैः सुसाधैः ।
महार्घभूषोचितरम्यरूपाऽ
प्याहो ! न पीडामकरोस्तदर्थम् ॥

प्रिये ! तव प्रेमभावोऽपि मय्यनितरसाधारणः ।

क्षेत्रे कदाचिच्च कठोरकर्म
व्यग्रं श्रमस्वेदजलाक्तदेहम् ।
विलोक्य मामश्रुपरीतनेत्रा
त्वदङ्गुलीः क्लेशयसि स्म मृद्वीः ॥

(किञ्चिद्विचिन्त्य) हा ! सरलशीले ! एतदेकमेवालं तव सतीधर्मलक्षणमभिष्टोतुम् । यथा —

भद्रमेव मम चिन्तितमासीत्
भ्रान्तिरार्जनविधौ न भवत्या ।
पत्युरुच्चविभवेष्वपि कांक्षा
स्वार्थ एव भवतीति गृहिण्याः ॥ (इति मोहमुपगतः)

श्रम :— आः ! प्रकृतिगम्भीरोऽप्यसौ प्राकृत इव मोहमुपैति । (विचिन्त्य) कथमेतन्नसंभवति ?

नाब्धिरेतु विलयं वडवाग्ने
र्नाद्रिरेतु पतनं पविघातात् ।
चित्तवांस्तु क इवात्र न मुह्येत्
प्रेमसंभृतकलत्रवियोगात् ? ॥

(इति पटान्तेन वीजयति)

गुण :— ( संज्ञामुपेत्य ) हा ! प्रिये ! कीदृशीमवस्थां प्राप्तासि ? कथं प्रियतमानपि प्राणान्मदर्थमत्याक्षीः । नोचितं कर्म समनुष्ठितं त्वया ।

भ्रम :— महात्मन् ! सखी यत्र कुत्राऽपि सजीवा वर्तत एवेति मन्ये । न कदापि संभवति प्राणत्यागः सख्याः । यतोहि—

शोकजालपतितं पतिं सती
दुःखिताऽपि न जहाति कर्हिचित् ।
अन्तरापतितनाथमम्बुजं
भ्राम्यति भ्रमरवल्लभाऽभितः ॥

अतो धैर्यमवलम्ब्य स्थीयताम् । अहन्तु सखीवृत्तान्तपरिज्ञानाय पर्यटामि । अनुज्ञा प्रसादीक्रियताम् ।

गुण :— ( दीर्घं निश्वस्य ) गच्छतु भवती । (भ्रमरिका गता)
(नेपथ्ये) कष्टं भोः ! कष्टम् । राष्ट्रमसितो हठादावृणोत्यनीकमरीणाम् । तथाहि —

गोलास्त्रपट्टपरिणद्धभुजान्तराल
माजानुलम्बिभुजगोपमखड्गकोशम् ।
भेरीनिनादपरिवर्धितशूरभाव
मावृत्य दुर्गमभितोऽस्त्यरिवीरसैन्यम् ॥

सर्वाध्यक्षो महाराज एवमाज्ञापयति ! यथा दण्डाध्यक्षः सत्वरं वाहिनीसहायः परसैनिकानवरुणद्धु । रक्षाध्यक्षोऽपि पौरजानपदसञ्चारस्य व्युत्क्रमो यथा न स्यात्तथा प्रयतेत ।

गुण :— ( श्रुत्वा ) निर्व्यूढं कर्म निर्वर्तितव्यं खलु सर्वेणापि विधिज्ञेन । कस्कोऽत्र : ।

भट :— (प्रविश्य) प्रभो ! का वा आज्ञा ?

गुण :— वारणक ! त्वं सत्वरं गत्वा सर्वत्र नगरे एवमुद्घोषणं कारय। यथा —

आवृण्वन्ति यदा राष्ट्रं शत्रवो धीविवर्जिताः।
तदैकचित्त्यं राष्ट्रीयजनानां विजयावहम् ॥

परस्परद्रोहचिन्तामुन्मुच्य स्थिरबुद्धयः।
वर्तन्तां निखिलाः पौरा राष्ट्रसंक्षेमतत्पराः ॥

भट :— तथा (इति निष्क्रान्तः) (नेपथ्ये) अतिघोरः समरः प्रचलति। तद्यथा —

हेतिप्रहारविनिपातितशत्रुकायं
रक्तप्रवाहपरिपङ्किलभूमिभागम् ॥
क्रोधातिरेकपरिवर्जितदेहमोहं
जन्यं तरां प्रचलति श्रुतसिंहनादम् ॥

(नेपथ्ये) द्वितीय :— किं न शृणोषि ? अस्मत्सैन्याध्यक्षः समरसिंहः शत्रुप्रहारेण विगतजीव इति ?

प्रथम :— मित्र ! किं कुर्वन्त्यस्मत्सैनिकाः ?

द्वितीय :— किं वच्मि। विगलितधीरभावा दिक्षु पलायन्ते।

दौवारिक :— (आगत्य) स्वामिन् गुणचन्द्र ! लेखहस्तः कश्चन राजपुरुषः सत्वरं भवद्दर्शनमपेक्षते।

गुण :— शीघ्रं प्रवेशय।

दौवा :— तथा (इति निष्क्रान्तः)

राजसेवक :— (प्रविश्य) स्वामिन् ! प्रभुप्रसादभूतेयं पत्रिका।
(इति पत्रिकां ददाति)

गुण :— (गृहीत्वोद्घाट्यान्तर्वाचयित्वा) प्रभोः शासनमुररीकृतं गुणचन्द्रेणेति सविनयमावेदय महाराजाय।

सेव :— तथा (इति निष्क्रान्तः)

गुण :—(आसनादुत्थाय)अहो! धन्यः खलु समरसिंहः। यतोहि -

यंवै स्वजन्म धरणीहितमाकलय्य
प्राणान्प्रियानपि जहाति तृणाय मत्वा।
तस्यैव जीवितमहो! नितरां हि धन्यं
मान्यं च तस्य चरितं स्पृहणीयवीर्यम् ॥

(नेपथ्ये) धिक् सैनिकान् यदिमे बुद्धिमपि चरणसात्कृत्य पलायन्ते।

गुण :— (आकर्ण्य खड्गपाणिः) न भेतव्यं न भेतव्यम्। अयमहमागच्छामि। शृणुत भोः सैनिकाः!

हर्यक्षा इव विक्रमैकमनसो दक्षाः प्रभूताहवे
कौक्षेयादिषु तीव्रहेतिषु चिरं ये शिक्षमाणा भटाः।
क्षुद्रक्ष्माभृदधिक्षिपद्बलभृतां तेषां विपक्षात्कथं
मन्दाक्षं प्रविहाय भीतिरुदियाच्चित्तस्य विक्षेपकृत् ॥

(इति पठन्निष्क्रान्तः)

इति महीधरोपाह्वयेन वेङ्कटरामशास्त्रिणा
विरचिते सरोजिनीसौरभे नाटके
अष्टमोऽङ्कः

# श्रीसरोजिनीसौरभे

## नवमोऽङ्कः



(ततः प्रविशति कश्चन योधः)

योध :— अहो! महाप्रभावः खलु गुणचन्द्रः। यतोहि—

तुरङ्गमारुह्य कृपाणपाणौ
नालीरणे द्राग्गुणचन्द्रवीरे।
लसन्मुखं सर्वमनीकमासी-
द्यथाऽब्जषण्डं समुदीक्ष्य भानुम्॥

जितशत्रोरपि परकीयखड्गसंप्रहारान्मूर्चितस्याऽस्मत्स्वामिनो गुणचन्द्रस्य न काऽपि क्षेमवार्ता श्रूयते। (परिक्रम्यावलोक्य च) (आकाशे) मित्र! भीषणक! केयं त्वरा गच्छतो भवतः? (श्रुतिमभिनीय) किं ब्रवीषि? अविज्ञातचरितस्य कस्याऽपि हौडुक्किकस्य परिचर्याविशेषवशेन लब्धसंज्ञस्य स्वामिनो गुणचन्द्रस्याभिनन्दनाय प्रभुर्बुधचन्द्र आस्थान्यां सपरिवारः प्रतीक्षते। विजयोत्सवमपि सर्वत्र नगरे प्रचलितं किं न पश्यसि? इति।

योध :— तर्हि तस्यानन्दस्याहमपि भागस्वामी भवेयम्। (इति निर्गतः)

(इति प्रवेशकः)

  

(ततः प्रविशति सपरिवारो राजा मन्त्री च)

राजा :— मन्त्रिन् ! पश्येदमाश्चर्यम् ।

लोके केचन नीतिदूरमतयो राज्याधिकारे स्थिताः
संपत्त्या स्विकयाऽनवाप्य कियतीं तृप्तिं वितृष्णाहताः
संपन्नं बहुसस्यशोभि परकीयं राष्ट्रमास्कन्दितुं
सोन्मादा न हि संकुचन्ति दुरुदर्कं कर्तुमायोधनम् ॥

मन्त्री :— अत एवान्ततस्ते विपत्तिमाप्नुवन्ति ।

राजा :— मन्त्रिन् ! किंवा तत्र कारणं मन्यते भवान् यदयं विजयी गुणचन्द्रो विजयोत्सवे हस्त्यारोहणविमुखो बभूव ?

मन्त्री :— राजन् ? प्रेयसीवियोगदुःखितोऽयमिति श्रूयते ।

राजा :— तदवस्थोऽपि कथमेतादृशमद्भुतं कर्म निर्वर्तितवानसौ ?

मन्त्री :— राजन् ! शृणोतु मदुक्तिं भवान्—

धीरस्तु सत्त्वगुणसङ्कलितात्मभावान्
शोकेऽपि लोकहितकृत्प्रकटीकरोति ।
कार्ष्ण्येऽपि मण्डलतले नयनाभिरामा-
नंशून्किरत्यमृतभानुरुदीर्णरोचिः ॥

(नेपथ्ये) जय ! जय ! दण्डनायक ! समुद्दण्डपराक्रम ! गुणचन्द्रवीर ! (इति कोलाहलः)

(ततःप्रविशति खड्गहस्तोगुण चन्द्रः समुचितपरिवारश्च राजा तमालिङ्ग्यासने समुपवेशयति । मन्त्री स्वयंचोपविशतः ।)

राजा :— महावीर ! राष्ट्रमिदमभिरक्षितं भवता ।



गुण :— प्रभो ! भवदाशीःप्रभावविलसितमिदम् ।

राजा :— गुणचन्द्र! दयावीररसयोरुभयत्र समरसो भवान्। अतो भवन्तमिच्छामि प्रजाभिरक्षणदक्षम्। पश्यात्र सत्यम् —

एकस्मिन्करुणाश्रमक्षिण परतः कोपानलं दुःसहं
वीणानिक्वणमेककर्णविवरेत्वन्यत्र भेरीरवम्।
एकस्मिन्सुममाल्यभारमपरे तीक्ष्णं कृपाणं करे
यो धत्ते युगपत्तमेत्य रमते धीरं नृपश्रीश्चिरम्।

मन्त्री :— राजन्! अपरमप्यस्ति वक्तव्यमत्र।

मोहे सत्यपि पक्षपातविरहः क्रोधेऽपि वाक्संयमः
कोशेऽप्यत्र निरीहता समुचिती दण्डाधिकारेऽपिच।
रागस्यानुदयो नितान्तसुलभास्वप्यङ्गनासु प्रजा-
नेतृत्वं व्रतमेव निग्रहधुरासाध्यं विदुः पण्डिताः॥

राजा :— गुणनिलय! मित्र! गुणचन्द्र! त्वय्येव निक्षिप्यतेऽयं राज्यभरः। (इति मुद्रिकां ददाति)

गुण :— प्रभुशासनमनतिक्रमणीयं भवति। (इति तां गृह्णाति)

राजा :— राज्यमतिसमृद्धं कारयितव्यम्।

गुण :— शृणोतु भवानत्र मदीप्सितम्।

कस्तूरीमधुमुख्यवन्यविभवः पल्लीषु संलभ्यतां
कुल्याम्भःपरिवर्धितं कृषिफलं ग्रामेषु संदृश्यताम्।
वस्त्रालङ्करणादि पूर्षु घटतां धीनैपुणीसाधितं
पल्लीग्रामपुरीवराञ्चितमिदं राज्यं हि संवर्धताम्॥

धर्मसंवर्धनायैव प्रयतिष्ये। धर्मस्त्वीदृश इति ममाभिमतिः। तथथा —

यस्याश्रयेणात्मनिगूढदोषो
निवार्यते सद्गुण उद्भूतः स्यात् ।
सर्वस्य लोकस्य च शर्म सिध्येत्
स एव धर्मः सहि सत्यमार्गः ॥

राजा :— मन्त्रिन् ! अद्यप्रभृति गुणचन्द्र एव सर्वाध्यक्षः सर्वान् परिपालयिष्यतीति सर्वत्र नगरे प्रख्यापनं कारय । अहमपि तपश्चर्यापरो भविष्यामि । ( इति मन्त्रिणा सह निर्गतः )

गुण :— (कञ्चन भटमाहूय) सर्वत्राऽस्मिन्स्वर्णप्रस्थनगरे त्वेव-मुद्घोषणं कारय । तद्यथा —

राज्येऽस्मिन्नवधूय दर्पमथवा सङ्क्षोभमप्यान्तरं
तस्याभ्युन्नतिमाकलय्य नितरां योवा जनोऽङ्गीकृतम् ।
स्वीयं कर्म समापयत्यहरहर्धन्यः स एवात्मवा-
नेवं चेन्मलपूरसावयममात्यो वेति भेदो न मे ॥

किञ्च—

नवीनताकल्पनचातुरीरता
श्चरन्तु सर्वत्र बुधा हितैषिणः ।
परानुकारैकमतिप्रगाढता
व्यनक्ति दोषं पुरुषस्य मूढताम् ॥

भट :— तथा (इति निष्क्रान्तः)

गुण :— (आत्मगतम्) अभ्युच्चयोऽप्ययं दुःखसन्धुक्षणायैव-भवति । तथाहि —

सहते हि महद्दुःखं प्रेयस्या संगतः पुमान् ।
तद्वियोगे महान्भावो दुःखायैव प्रकल्पते ॥

प्रतीहारी :— (प्रविश्य) प्रभो! सुधापूर्णनामा कश्चन युवा प्रभुदर्शनमपेक्षते।

गुण :— अविलम्बितं प्रवेशय।

प्रती :— तथा (इति गतः)

गुण :— (सर्वानुद्दिश्य) भवन्तः स्वीयं कर्म निर्वर्तयन्तु। (भटमेकं विहाय सर्वे गताः)

सुधा :— प्रविशन्नात्मगतम् —

दत्ते करेण प्रतिनन्द्य सर्वं
मूर्ध्नि स्थितिं प्रेमवशाद्ददाति।
तथाऽपि पार्श्वे चकितोऽस्य वर्ते
यथाऽनिशं हस्तिपको गजस्य॥

(गुणचन्द्रमुपेत्य) शुभसन्ततिमभिनन्दामि महाभागस्य।
(इति नमस्करोति)

गुण :— अनुचितोऽयमुपचारः प्रियमित्रस्य। (सुधापूर्णमालिंग्यासन उपवेशयति। स्वयं चोपविश्य सुधापूर्णकण्ठे मुक्ताहारं विलोक्य) सखे! कथमुपलब्धोऽयं प्रभुकण्ठभूषणं मुक्ताहारः?

सुधा :— सखे! सत्यमित्थमवेहि। यथा —

चन्द्रोत्तरबुधगुणसं
सर्गे ह्युपलब्ध एष शुभहारः।
तेनाद्रियते प्रेम्णा
सुहृदः प्रियसङ्गमुख्यवेलायाम्॥

गुण :— मित्र ! एतेन ह्यभियोगविचारकालिकः संशयः परास्तः । (सुधापूर्णः किञ्चिद्धसति) सखे ! किमत्र वक्तव्यम् ?

सुहृत्स एव यः काले स्वार्थं नात्मनि चिन्तयन् ।
प्रेमैकरससंक्लिन्नो दुर्गतं परिरक्षति ॥

प्रती :—(आगत्य) प्रभो! काचन योगिनी स्वामिनं द्रष्टुमिच्छति।

गुण :— (आत्मगतम्) तद्वेषधारिण्या भ्रमरिकया भाव्यम्। (प्रकाशम्) प्रवेशय पूजार्हाः खलु योगिन्यः।

प्रती :— तथेति निर्गतः ।

योगि :— (प्रविश्य) (स्वगतम्) परिशील्याऽप्यविदितवृत्तान्ता प्रियसखी । किंवा निवेदयामि प्रभोर्गुणचन्द्रस्य ? (गुणचन्द्रमुपसृत्य) सर्वाध्यक्ष ! महाराज ! वन्दते भ्रमरिका ।

गुण :— अयि ! भ्रमरिके ! समुपलब्धा तव प्रियसखी ?

योगि :— स्वामिन् ! दुःखमुत्पद्यते नेति प्रतिवक्तुम् ।

गुण :— हा ! प्रेयसि ! त्वमन्ततो मे दुःखकारिणी सञ्जाता ! (इति दीर्घं निश्वसिति । भ्रमरिकासुधापूर्णौ समाश्वासयतः) (नेपथ्ये) हौडुक्किको हुडुक्कमाहत्य) कालि ! भद्रकालि ! भद्रकालि ! अभिवदतु भवती अविदितमपि परस्य चरितम् । (पुनःपुनर्हुडुक्कमाहत्य तथैव वक्ति)

भट :— (गुणचन्द्रमुद्दिश्य) महाप्रभो ! शत्रुप्रहारसम्मूर्छितं भवन्तमविदितसञ्चारक्रमः कश्चन हौडुक्किकः समुपचरितवान् । (सर्वे आश्चर्यं नाटयन्ति)

गुण :— तेषां निकटे मणिमन्त्रादयो विद्यन्ते। तमन्तराह्वय।

(भटो निर्गत्य तेन सह प्रविशति)

हौडुक्किक :— (गुणचन्द्रं दृष्ट्वा) राजाधिराज! महाराज! दीनोऽयं जनोऽभिवन्दते (इति शिर आवर्ज्य नमस्करोति)

भट :— महाप्रभो! स एवायं हौडुक्किको योऽहि स्वामिनमुपचरितवान्।

गुण :— (तमादरेण पश्यन्) अयि! कुत्र तव निवासः?

हौडु :— प्रभो! यत्र भैक्ष्यमुपलभ्यते तत्रैवास्माकमावासः।

गुण :— त्वं मामुपचरितवानिति भटैः प्रतिपाद्यते। अपि सत्यमिदम्?

हौडु :— महाप्रभो! भटानामसन्निधानात्तत्काकतालीयतया समभवत्।

गुण :— का वा भवतो विद्या?

हौडु :— भद्रकालीप्रसादाद् भूतपूर्वमभूतपूर्वं वा वृत्तान्तं प्रतिपादयेयम्।

योगि :— तर्हि प्रभोरस्य भाविनीं स्थितिं कथय।

हौडु :— भद्रे! महाराजभोगमन्तरा किमन्यदपरमस्ति वक्तव्यम्?

योगि :— इष्टजनवियुक्तस्य कथमेतत्संभविष्यति?

हौडु :— (हुडुक्कं पुनराहत्य) तपस्विनि! इष्टजनः सन्निकृष्ट एव भविष्यति।

गुण :— जीवति वा मम प्रेयसी? (इति हठात्पृच्छति)

हौडु :— (किंचिद्विहस्य) प्रभो! किमर्थोऽयमावेगः?

गुण :— (हौडक्किकस्य गण्डभागे स्मितकृतं नतभागमालोक्य) (आत्मगतम्) गण्डभागोऽस्य सरोजिन्या मुखं स्मारयति माम् (इति तस्याऽननं पुन:पुन: पश्यति)

योगि :— भद्र! कुत्र वर्तते सा तरुणी ?

हौड :— (किञ्चिद्विहस्य) तपस्विनि! प्रश्नोऽयं तव योगिनीत्वं द्रढयति।

योगि :— कुत एतत् ?

हौड :— यतस्त्वं सन्निहितामपि तां दूरवर्तिनीं गणयसि।

योगि :— कथमेतत्सम्भवति ?

हौड :— अयि! तस्याः स्थानमेतस्य हृदयसीमैव खलु भवति। (इति हसति)

गुण :— भावरूपा सा दुःखमेवोत्पादयति। सत्यरूपां तां कथय।

हौड :— प्रभो! सर्वं जनामि भद्रकाल्याः कटाक्षात्। तथापि प्रच्छन्नरूपां तां न शक्नोमि प्रकटीकर्तुम्।

गुण :— प्रच्छन्नरूपतायाः कारणं किंवा स्यात् ?

हौड :— मानरक्षणमेव हेतुस्तत्र।

योगि :— अतीतप्रयोजना हि सा प्रच्छन्नरूपता संपद्येत नाम। अधिगतविभवे भर्तरि तदवलम्बनस्य न किमपि प्रयोजनमुत्पश्यामि।

भट :— (स्वगतम्) प्रभुसंबन्धित्वेन क्रमवादोऽयं हृदयङ्गमो वर्तते। अन्यथा को वा विवदमानस्तिष्ठति दुर्भगेन हौडक्किकेन सह चिरम्।

हौडु :— योगीश्वरि! भर्तुः प्राभवाप्राभवविचारं नैव कुर्वन्ति साध्व्यः। किन्तु गुणानेवाभिमत्य सेवन्ते। पश्यतु भवती स्त्रीणां स्वभावमधुरां चित्तवृत्तिम्। तद्यथा —

निरास्पदस्यापि जनस्य सद्गुणान्
समाद्रियन्ते स्वत एव योषितः।
तृणञ्च सौरभ्यविशेषबन्धुरं
वहन्ति मूर्ध्ना सुभगं सुमं यथा॥

प्रभुरयं चन्द्रमरीचिसुन्दरगुणः प्रभुताविशेषभासुरत्वेनाश्रयणीयश्च भवति।

गुण :— (स्वगतम्) अस्य कण्ठनादः सरोजिन्याः स्वरयोगमनुभावयति।

योगि :— हौडुक्कि! तर्हि किमर्थोऽयं प्रच्छन्नसञ्चारस्तस्याः?

हौडु :— लोकापवादभीतिमनुचिन्त्य।

योगि :— स्पष्टं वद लोकापवादभीतेः कारणं तस्याः।

हौडु :— (हुडुक्कमाहत्य) अम्बा वक्ति सत्यमत्र।

मर्त्यो दुराचारविगर्हितोऽपिसन्
दुर्वक्ति नारीं पतिदूरवर्तिनीम्।
शुद्धात्मशीलाऽपि निलीयते ततो
लोकात्समुत्का प्रियसङ्गमेऽपि सा॥

गुण :— अयि! एतादृशः सङ्कोचभावस्तस्याः सुतरामनुचित एव। यतोहि —

धूमोऽनलं भौमरजोऽनिलं पयो
ह्यार्द्रं यथा दूषयते न शैवलः।

दुर्धीस्तथा सच्चरितं महात्मनां
वैकल्यमीयान्नहि तत्र बुद्धिमान् ॥

होड :— (अङ्गीकारं सूचयन्निव शिरश्चालयति। तेन शिरस्त्राण-मस्य पार्श्वलम्बी भवति)

गुण :— (तं सरोजिनीमभिज्ञाय तस्य हस्तं गृहीत्वा शिरस्त्राण-मपसारयति)

(सरोजिनीं ज्ञात्वा सर्वे विस्मयमभिनयन्ति)

अयि! सुन्दरि! शृणु माम् —

मृत्युलोकमधिगम्य विशुद्धै
स्त्वद्गुणैस्तमनुतोष्य सुशीले!
मां वियुक्तमभिरक्षितुमारा-
दागतासि कृपयेति च मन्ये ॥

सरो :— नाथ! क्षमस्व मामायासकारिणीं तव।

गुण :— भद्रे! तवातर्कितोपनतेन संसर्गेण पुनर्भवमात्मनं मन्ये। (योगिनीं दर्शयन्) कां वा मन्यते भवती योगिनीमिमाम्।

सरो :— नैव जाने भगवतीमिमाम्।

गुण :— सुदति! त्वदन्वेषणतत्परा भ्रमरिका।

(सरोजिनीभ्रमरिके परस्परमालिङ्गतः)

सुधा :— सुशीले! सुधापूर्णोऽयं त्वामभिनन्दति।

सरो :— नमस्ते महाभागाय।

(काचन परिचारिका प्रविशति)

परि :— महाप्रभो! तपस्विनो बुधचन्द्रस्य दाराः पुण्यवती देवी

परिरक्षितशुद्धशीलां महाराज्ञीं सरोजिनीं भ्रमरिकां च द्रष्टुमिच्छति। ततः स्वामी प्रमाणम्।

गुण :— नन्वाराधनीयाः पूजार्हाः शुभेषु कालेषु। उभे अपि गच्छताम्।

(सरोजिनी भ्रमरिका च परिचारिकया सह निष्क्रान्ते)

(कश्चन पत्रहस्तः पुरुष आगत्य नमस्कृत्य गुणचन्द्राय पत्रमेकं ददाति। गुणचन्द्रोऽपि तत्पत्रं गृहीत्वा निभृतं पठित्वा सुधापूर्णहस्ते निक्षिपति)

सुधा :— (पत्रं वाचयति) " विदितपराक्रमादिसद्गुणाय गुणचन्द्रमहाराजाय सन्निहितराज्याधिनेता विजयसिंहो नमःशतमर्पयित्वा विज्ञापयति। गुणवता भवता मयि सोदरस्नेहो दर्शयितव्यः। यद्यन्यः कश्चन दुर्मतिराघयो राष्ट्रमवस्कन्दितुमापतेत्तर्हि तदोभावप्यावां परस्परसहायेन तं धूर्तं विजेष्यावहे इति।

गुण :— सुधापूर्ण ! सोऽयं विजयसिंहश्चिरद्वेषी खल्वस्य राष्ट्रस्य।

सुधापूर्ण :— तव गुणसन्ततिमाकर्ण्यैवंविधः सञ्जातः।

गुण :— सखे ! अवश्यमस्य स्नेहोऽङ्गीकार्य एव। (इति लेखमेकं विलिख्य दूतहस्ते विससर्ज। दूतोऽपि नमस्कृत्य गतः)

परिचारिका :— (समागत्य) प्रभो ! देव्या पुण्यवत्या स्वहस्ताभ्यामलंकृतां तरुणीं सरोजिनीं राज्ञीमागच्छन्तीं पश्य।

(अलंकृता सरोजिनी तथाविधया भ्रमरिकया सह प्रविशति)

गुण :— प्रेमपूत्या दृष्ट्या सरोजिनीं पश्यति)

सुधा :— (भ्रमरिकां पश्यति)

( गुणचन्द्रस्याज्ञया उभे अपि आसनयोरुपविशतः ) पुष्प-वृष्टिः पतति)

प्रती :— (आगत्य) महाराज ! लक्ष्मीनगरान्महात्मा मणिदासः तत्पत्नी सुव्रता धात्रीच समागताः।

सरो. :— अप्यम्बा पिता धात्रीच समागच्छन्ति ?

गुण :— नन्वयं शुभसन्ततेः समुदयः। ( प्रतीहारिणं वीक्ष्य ) प्रवेशय प्रेयसीबन्धूनेतान्।

प्रती :— तथेति निर्गतः।

( मणिदासः सुव्रता धात्रीच प्रविशन्ति )

(गुणचन्द्रादयः सर्वं उत्तिष्ठन्ति )

गुण :— महाभाग ! विनीतो गुणचन्द्रोऽभिवादयते।

सरो :— मातापितरावभिवन्दते सरोजिनी धात्रीं च।

मणिदास :— जातौ ! युवामुत्तीर्णक्लेशजातौ दिष्ट्या पश्यामः।

सुव्रता :— ( आनन्दप्रवहिणा चक्षुषा पश्यन्ती ) सौशील्या-दुत्तीर्णा क्लेशजातात् (इति दुहितरमालिङ्गति )

धात्री :— भद्रे ! भर्तुसहितां त्वां पश्यामि।

मणि :— कुमार ! गुणचन्द्र ! आत्मशक्त्यैव क्लेशार्णवमुत्तीर्य भवद्गुणानुगुणां पदवीमधिरूढवानसि।

गुण :— तत्सर्वं तथाविधमेव भवतु। भवत्सुतामुद्दिश्यतु किञ्चि-द्वक्तव्यमस्ति। तद्यथा—

अत्यैतामसमनवतीं दुर्लभां विस्मायित्वा



दैवादद्य प्रकृतिललितामेत्य मोदं भजेऽहम्।

क्लिष्टस्वप्ने प्रबलतरवैकल्यभावेन खिन्नं
स्वान्तं गच्छत्यतुलसुखदं लाघवं हि प्रबोधे ॥

मणि :— जात ! दैवकृपातः सर्वथेयं शुभसन्ततिरुपलब्धा किमन्यदपेक्ष्यमस्ति भवतः ?

गुण :— महात्मन् ! नकिंचिदपरमस्ति । किन्तु प्रियसुहृदमिमं प्रधानसचिवं कर्तुमिच्छामि ।

मणि :— सदृश एवायमुपचारो भवन्मित्रस्य ।

सरो :— नथ ! ममापि कश्चिदभिप्रेतोऽर्थोऽस्ति ।

गुण :— अवश्यं माननीयः खलु सख्याः प्रार्थितोऽर्थः ।

सरो :— मम सखीं भ्रमरिकां सुधापूर्णप्रेमपात्रं कर्तुमिच्छामि ।

गुण :— मित्र ! सुधापूर्ण ! सरोजिन्या अभिमतं तवाप्यभिमतमिति तर्कयामि ।

सुधा :— महराज्ञ्याः शासनं केन वा नाद्रीयते? । (सर्वे हसन्ति)

सरो :— भद्रे ! सुधापूर्णो भवत्याः स्नेहसुधापात्रं भवतीति प्रमोदोऽस्माकम् ।

(सर्वे पृथक्पृथगाशिषो वितरन्ति)

सुधा :— गुणचन्द्र ! एवद्वाक्यस्य भवानेवोदाहरणं भवितुमर्हति तद्यथा—

ब्रह्माण्डेऽस्मिन्नजडमयते वस्तु संस्तुत्यभावं
श्रेयांस्तत्र स्वपरसमताभावुको जीवलोकः ।
रागद्वेषानुपहतधियः साधवोऽत्र केचि-
त्प्रेमाद्भुतस्थितिमनुभवन् कश्चिदेवात्र धन्यः ॥

गुण :— सुहृदभिनन्दनं शिरोधार्यं भवति ।

मणि :— जात ! गुणचन्द्र ! किमन्यदस्ति प्रार्थनीयं भवतः ?

गुण :— महाभाग ! न किमप्यस्ति प्रार्थनीयमन्यत् । तथापीदमस्तु भरतवाक्यम् ।

सम्पत्तिदानं नहि मुख्यमस्ति
न श्रान्तिदानं नच भूमिदानम् ।
दीनस्य लोकस्य सुखाप्तिहेतुः
प्रेमैकदानं नृवरेषु भूयात् ॥

इति महीधरोपाह्वयेन वेङ्कटरामशास्त्रिणा
विरचिते सरोजिनीसौरभे नाटके
नवमोऽङ्कः ।

इति श्री महीधरोपाह्वयेन विशुद्धात्मनोः श्रीचलमाम्बा-
वेङ्कटरामदीक्षितयोस्तनयेन भारद्वाजसगोत्रेण
सन्ततसारस्वतसेवापरिणतवयसा श्रीवेङ्क
टराम शास्त्रिणा विरचितं सरोजिनी
सौरभं नाम नव्यं नाटकं
समाप्तम्

:ఈ గ్రంథకర్తచే రచింపబడిన ఇతర గ్రంథములు :-

శ్రీ భాషాకువలయానందము

అర్థాలంకార వివరణము

గద్యపద్యాత్మకము

ప్రాప్తిస్థానము :-

మహీధర వేంకటరామ

ఆంధ్ర యువతీ సంస్క